# सरल-कठिनसंस्कृतम्

(कठिनसंस्कृताध्यापनस्य अध्ययनस्य च सरलः मार्गः)

15 घण्टाः

सङ्कलनं सम्पादनं च

प्रो. डा. तिरुमल पि. कुलकर्णी

प्रकाशनम्

ऐतरेयशोधप्रकाशनपीठम् । श्रीभागवताश्रमप्रतिष्ठानम् । श्रीभण्डारकेरिमठः

ಪರಮಪೂಜ್ಯ ಶ್ರೀ ವಿದ್ಯೇಶತೀರ್ಥರು ರಚಿಸಿದ ಈ ಕೆಳಕಂಡ ಕೃತಿಗಳು ಶ್ರೀಮಠದಿಂದ ಪ್ರಕಾಶಿತವಾದ "ಪ್ರತಿಸ್ಮೃತಿ" ಎಂಬ ಸಂಗ್ರಹದಲ್ಲಿ ಉಪಲಬ್ಧವಿವೆ:

* * * * *

- ಗುರಿಯಿಲ್ಲದ ದಾರಿ
- ಗೀತಾಸಾರಸೌರಭ
- ಗೀತಾರ್ಥವೈಭವ
- ಶಿವರಾತ್ರಿರಹಸ್ಯ
- ಹರಿತತ್ತ್ವಚೂಡಾಮಣಿ
- ವಾಸುದೇವನಲ್ಲಿ ಗೀತಾಕಟಾಕ್ಷ
- ಗಾಯತ್ರಿಯಲ್ಲಿ ಅಧ್ಯಾತ್ಮದೀಪ
- ಗೀತೆಯಲ್ಲಿ ಪ್ರಾಣತತ್ತ್ವದ ಹಿರಿಮೆ
- ಹರಿತೀರ್ಥವಿವೇಕಃ
- ಭಾಗವತವು ಬೆಳಗಿದ ವೇದಾಂತದೀಪಾವಳಿ

(ರಕ್ಷಾಪುಟ 3 ರಲ್ಲಿ ಮುಂದುವರೆದಿದೆ)

# सरल-कठिनसंस्कृतम्

(कठिनसंस्कृताध्यापनस्य अध्ययनस्य च सरलः मार्गः)

*सङ्कलनं सम्पादनं च*

प्रो. डा. तिरुमल पि. कुलकर्णी

प्रकाशनम्

ऐतरेयशोधप्रकाशनपीठम्

श्रीभागवताश्रमप्रतिष्ठानम्

श्रीभण्डारकेरिमठः

**Sarala Kathina-Samskritam** *(Simple Tough-Sanskrit)*

*A New Method of Teaching and Learning Sanskrit*

***Compiled and Edited by***
**Prof. Tirumala P. Kulkarni**
Poornaprajna Vidyapeetha
Sri Vishveshateertha Swamiji Road
Vidyapeetha Circle, Bengaluru - 28



***First Edition:*** 2015
***Copies:*** 5000
***Pages:*** 8+112

***Price:*** **70**

***Published by:***
**Aitareyashodhaprakashana Peetha**
Sri Bhagavatashrama Pratishthana
Sri Bhandarakeri Matha
Girinagara, Bengaluru - 560085
Karnataka, India
Telephone: 080-26721527

***For copies enquire:***
*1. The publisher*
*2. Editor (+919449081309)*

***For updates and news, visit –***
www.sksedu.net

***Cover Page Design:***
Anagha Pandurangi +918867368578

***Printers:***
Vagartha, Bengaluru

॥ श्रीः ॥

अंभृणी. के

# विषयानुक्रमणी

# समर्पणम्

शास्त्र-संस्कृतिसंरक्षणनिरताय प्राचीनाधुनिकविद्याविद्यावत्सङ्गमाय

षष्टितमवत्सरे कृतपदनिक्षेपाय

**पूर्णप्रज्ञविद्यापीठाय**

तथा, यत्र मे श्री विनीत चैतन्य, डा. रामकृष्णमाचार्युलु, डा. राजीव संगल्

डा. अंबा कुलकर्णि

डा. उमा महेश्वर राव्

सदृशानां दिग्दन्तिनां परिचयो जातः तादृशाय, हैदराबादस्थ-केन्द्रिय-विश्वविद्यालयस्य

**CALTS**

(Center for Applied Linguistics and Translation Studies)

इति विभागाय, तथा

सरलसम्भाषणादिनवीनोपायैः संस्कृतसंरक्षणे बद्धादरायै

**संस्कृतभारत्यै**

च इदं पुस्तकं सादरं समर्प्यते

-प्रो. डा. तिरुमल पि. कुलकर्णी

# कृतज्ञताविनिवेदनम्

येषां परमानुग्रह-विद्योपदेश-वात्सल्य-शुभाशीर्वाद-प्रेरण-प्रोत्साहबलात् अयं प्रयत्नः सम्पन्नः तेषां परमपूज्यानाम् उडुपीपेजावरमठाधीशानां श्रीश्री१०८श्रीविश्वेशतीर्थश्रीचरणानाम्

संस्कृति-संस्कृतरक्षणदीक्षाणां, विद्यावतां बहुमानेन प्रथितयशसां, तपस्विनां, प्रथमावलोकने एव अस्य ग्रन्थस्य स्वरूप-उद्देश्य-प्रयोजनानि संलक्ष्य प्रकाशनेन अनुग्राहकाणां भण्डारकेरिमठाधीशानां श्रीश्री१०८श्रीविद्येशतीर्थश्रीपादानां च चरणनलिनयोः सभक्तिश्रद्धं नतिततयः समर्प्यन्ते ।

संस्कृतक्षेत्रे शास्त्राध्ययनाय मां प्रेषितवतोः पूज्ययोः मातापित्रोः

पूर्णप्रज्ञविद्यापीठे प्रीत्या विद्यां वर्षितवतां समस्ताध्यापकानां, विशेषतः श्री वेङ्कटेश बायरि, श्री वेङ्कटेश देशपाण्डे महोदययोश्च अहमधमर्णः ।

काले काले प्रोत्साहितवतां श्री सि. एच्. बदरीनाथाचार्याणां तथा श्री यु. केशवाचार्याणाम्,

स्वयमेतत्पुस्तकानुसारेण पाठान् विधाय प्रयोगप्रामाण्यस्य संवादं कृतवते श्री डा. धनञ्जयाय,

प्रकाशनपूर्वपरिशीलनं विधाय स्वीयसूचनाभिः पुस्तकस्य उपयुक्ततां वर्धितवतां सर्वश्री रामकृष्णमाचार्य, विनीत चैतन्य, डा. कोरड सुब्रह्मण्यं, डा. जि. उमा महेश्वर राव्, मार्सिस् गसून्स् (**Marcis Gasuns**), वि. हरिदास भट्ट, डा. वीरनारायण पाण्डुरङ्गि, डा. जयदीप जोषि, डा.एन्. आर्. जोषि महोदयानां, तथा, श्रीमती डा. अम्बा कुलकर्णि, डा. वरलक्ष्मी महोदययोः,

आबाल्यं विविधप्रकारैः प्रोत्साहितवते प्रकृते कन्नडप्राक्कथनस्य आंग्लानुवादेन उपकृतवते मातुलाय डा. जि. वि. कुलकर्णिमहोदयाय तन्मित्राय डा. के. एस्. शर्मा महोदयाय, तथा, हिन्दी अनुवादेन उपकृतवतोः श्री के. नागराज, श्रीमती पूजा साह्नी महोदययोः,

मार्गदर्शनेन पुस्तकस्यास्य प्रस्तुतीकरणे साहाय्यकृतां सर्वश्री सुब्बण्ण, प्राणेश, प्रह्लाद, के. एम्. शेषगिरि, श्रीनिधि सातेनहळ्ळि, डा. वि. श्रीनिधि महोदयानाम्,

सुन्दरमुखपुटनिर्माणाय कु. पाण्डुरङ्गि अनघायै

मुद्रणकार्ये प्रथितयशसां वागर्थमुद्रणालयाधिकारिणाम्

प्रत्यक्षं परोक्षं च कारणीभूतानां समेषाम्

हार्दिक्यः कृतज्ञतावाचः समर्प्यन्ते ।

श्रीरामाय नमः

# हृदयवाणी

१९९३तमे वत्सरे अस्माकं चातुर्मास्यव्रतकार्यक्रमः पूर्णप्रज्ञविद्यापीठे, पूर्वाश्रमे यत्रास्माकं काव्य-व्याकरण-न्याय-वेदान्तशास्त्राभ्यासः समजनि, उपकल्पितः आसीत् । तदानीमन्तिमवर्षे अधीयानः युवा तिरुमल कुलकर्णी महता अनुरोधेन स्वसुहृद्भिः सह अस्माकं सविधे भागवत-पाठमश्रौषीत् । चातुर्मास्यान्ते पाठः स्थगितः, परन्तु सम्बन्धः अनुवर्तितः । अयं हैदराबादस्थ-विश्वविद्यालये संस्कृत-सङ्गणकसम्बन्धिविशेषाध्ययनं व्यधादिति ज्ञातमासीत् । तस्य अन्यान्यफलेषु `सरल-कठिनसंस्कृत'नाम इदं कार्यं विशिष्टं बहूपयोगि च विद्यते । अस्माभिः अयं ग्रन्थः, प्रकाशन-पूर्वपरिशीलकानां सूचनाः प्रतिक्रियाश्च समवलोकिताः । वयं विश्वसिमः यत्, अनेन संस्कृताध्यापने अध्ययने च नूतनः स्तरः सम्पादयितुं शक्यः । `भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा' इति सूक्तिं, संस्कृतिसंरक्षणे संस्कृतस्य पात्रं, आधुनिककालेऽपि संस्कृत- संवर्धनस्यावश्यकतां च मनसि निधाय विचार्यमाणे अस्य पुस्तकस्य महत्त्वं स्फुटतरं भवति।

यथा देहस्य बुभुक्षानिवृत्तये अन्नादिभोजनम् आवश्यकं, मनसः क्षुन्निवृत्तये प्रीति-स्तुति-स्नेहादिरूपाहारः अपेक्षितः तथा आत्मनः `कोऽहम् ? कुतस्त्यः ? कुत्र प्रस्थितः ? किं मया कार्यम् ?' इत्यादिजिज्ञासारूपक्षुधः परिहाराय आध्यात्मिकतत्वम् अनुष्ठानोपायाश्च आवश्यकाः भवन्ति। तेषाम् अत्यन्तसूक्ष्माः विचाराः मार्गदर्शितत्वानि च संस्कृतवाङ्मये अतिबहुतया द्रष्टुं शक्नुमः। यदि जनाः तानीमानि जानन्ति, ज्ञात्वा अनुतिष्ठन्ति, तत्रापि मूलग्रन्थतः एव अवगन्तुं प्रभवन्ति तर्हि वैयक्तिकाः सामुदायिकाः जागतिकाश्च बह्व्यः समस्याः सूर्योदये सति तुषार इव क्षिप्रं विलीयन्ते । यथा यत्र यत्र

क्षेत्रे सङ्गणकं प्रविष्टं, तत्र तत्र, कार्ये अतिशयः सन्दृश्यते, तथा ये ये अन्यान्यक्षेत्रेषु कृतभूरिपरिश्रमाः जनाः संस्कृतेन, संस्कृतस्थमूलग्रन्थैः सम्बद्धाः ते ते नवीनां स्फूर्तिं प्रेरणां च प्राप्तवन्तः ।

तदेवं समाजविकासाय आत्मविकासाय च संस्कृतस्य संरक्षणं करणीयम् । तस्मिन् कार्ये अस्य पुस्तकस्य योगदानं भवितुमर्हति इति वयं चिन्तयामः । किञ्च, अत्र दर्शिताः अंशाः यदि आत्मसात् क्रियन्ते तर्हि साम्प्रदायिकगुरुकुलच्छात्राणां संस्कृतस्तरोऽपि औन्नत्यं नीयते इति निश्चप्रचं वक्तुं शक्यते ।

भगवतः विषये `अणोरणीयान् महतो महीयान्' `तद्दूरे तदु अन्तिके' `गुणाः श्रुताः सुविरुद्धाश्च देवे सन्त्यश्रुताः, नैव दोषाः' इति शास्त्रेषु कथितमस्ति । भगवत्प्रतिपादकसंस्कृत-भाषायामपि तद्वत् सरलत्व-कठिनत्वरूपविरुद्धधर्मवत्त्वं वर्तते इति नाश्चर्यम् । एतावत्पर्यन्तं सरलसम्भाषाणादिरूपेण कठिनत्वासमानाधिकरणं सरलत्वं ज्ञातमासीत्, इदानीं कठिनत्व-समानाधिकरणमेव सरलत्वमनेन पुस्तकेन आविष्कृतमिति वयं भावयामः ।

सरलसंस्कृतबोधनपाटवेन सश्रमं 'सरल-कठिन-संस्कृत'नामकमिमं ग्रन्थं विरचितवन्तं विद्वांसं तिरुमलकुलकर्णिनं नारायणसंस्मरणपूर्वकं सानन्दमभिनन्दामः ।

अस्य प्रकाशनेन अस्मदुपास्यः श्रीसीतारामचन्द्रः प्रसीदतु ।

इत्यनेकनारायणसंस्मृतयः

**श्रीविद्येशतीर्थाः**

श्रीभण्डारकेरि मठः

# Before you use . . .[1]

Yes! This book is meant not just for reading but also to be used as a work-book, it's truly a practice oriented book. In short, it is a new idea, and a new manifestation.

## I want to read Sanskrit in the original, but . . .

Many people have admiration for Sanskrit. Countless number of people have a strong desire to study Sanskrit.

Many try, but, few really succeed. Some say, "Sanskrit is a very difficult language. Its rules are many, its grammar is very difficult to digest".

There are people who have long association with the Sanskrit language. They can converse in Sanskrit, but when they desire to read classical texts, they find that it's a hard nut to crack.

I have seen many dedicated people, in the age group of 35 - 40 years, who are bright and brilliant in their own spheres. They have a deep love for oriental culture and wisdom. They come to a *guru* to study the scriptures on weekends, or on holidays. The *paatha*(lesson) starts with either Bhagavadgita or some Upanishat. After two or three months they realise that they are able to understand the translation provided by their *guru*, but they are unable to understand the main text. Then, they request their *guru* to teach them Sanskrit language. Parallel lessons begin. As per tradition, they are introduced to the *"a"kaaraanta-"e"kaaranta,* male-female-neutral words, pronouns, verbs - in the ten *lakāras* along with the text books they are studying. Even after 4 or 6 months of study their understanding of the main

[1] The original Kannada preface of English preface and Hindi translation are given in appendix.

scriptures remains unintelligible as ever. How many conjunction words, *sandhis* ? How many compound words, *samaasas* ? Gradually the interest begins to fade. As a result, attendance becomes irregular and naturally the study comes to a grinding halt. Some enthusiasts continue with the hope that little knowledge is better than no knowledge. If you ask them, 'How much of the main text you have understood?'.'A bit, a little bit', will be their answer. Some dedicated students are ready to face all the odds and obstacles. They may take more time, but they can read the original texts and understand the inner meanings. They are worthy of our admiration.

Let us talk about some realities. People who work in the fields of *Ayurveda* and *Yoga* really want to understand the original texts. They want to know and appreciate the subtleties and nuances of the texts. They want to grasp the inner meanings and the hidden messages there-in. They have no alternative. They have to study Sanskrit. 'How much Sanskrit do we need? From where we can get it?' These are their questions.

Linguistics, the science of languages, has grown widely in the last century. There are hundreds of scholars in our Universities who conduct research and present papers in various Conferences. The unfortunate thing is that they have not read the most important author, who can be called as father of Linguistics, sage Panini. If they want to understand Panini's contribution in any specific field, one has to study Sanskrit. The same questions recur: 'How much Sanskrit do we need? From where we can get it?'

**Dreams have the seeds of reality hidden in them**

With this background can we dream to learn Sanskrit?

......those who are studying Vedanta will have to study every word, and grammar provides foundation for each word which unfolds its meanings.

......we should have hundreds of Ayurvedic physicians around us who have read Charaka-Sushruta's texts thoroughly, not superficially. In future those who intend to study Ayurveda must study Sanskrit seriously as ritual with devotion, a dedication and passion.

.....a scholar who is doing his/her Ph.D. in political science should be able to quote Kautilya's original in his/her thesis with a good translation.

.....many lawyers, judges should have the ability not only to understand unique lines quoted from the Smrutis by legal luminaries like that of Sri Rama Jois but also have the ability to quote Sanskrit texts in their arguments and judgments.

**About this humble effort**

We do not claim that this book is the first of its kind in teaching Sanskrit. But this is a new break-through and a novel effort to teach difficult Sanskrit in an easy simple way. It provides a ladder to climb a difficult wall named Sanskrit. The aim of this book is not to make other books redundant. It provides a valuable complement to the existing books.

**What is meant by 'Sarala Kathina-Samskrita' (Simple Though-Sanskrit)?**

I was deputed for two years (1997-99) to the Central University, Hyderabad, to undergo an intense training in Computers. I remember to have read an article where-in it tells about teaching English to the non-English foreign students. A three months course in English could teach medical or engineering students enough English to cope up with their studies for three or

four years. I was wondering why we should not design such a course to teach Sanskrit and Kannada to the interested students.

Government of India had a project for "Preparing tool-kit for Sanskrit and Sanskrit-Hindi Machine translation" during 2008-12. This was conducted under the able guidance of Smt Amba Kulkarni, Professor of Sanskrit, Department of Sanskrit, Central University, Hyderabad. I worked as a Coordinator from the Bangalore Center. Many tools to analyze Sanskrit language were developed during that period. (http://sanskrit.uohyd.ernet.in/~scl/SHMT). I strongly felt that by using these tools we can prepare a syllabus for "Vedanta-Sanskrit". In one meeting held at Delhi under the aegis of DIT (Department of Information and Technology) when I proposed this, there was a positive response from the scholars and administrators.

As an experiment, I conducted lessons for five students, Vasudeva, Srivatsa, Venugopala, Vijaya Sarathy and Sumanth, who were professionals in the fields of Information Technology and Biotechnology. The *shabda-avyaya-sandhi-samasa-kriyaapada* which were frequently used (95%) and other language related nuances were specially taught to them. By this method we realized that a reader is able to understand most of the Sanskrit texts.

I presented a paper called 'Vedanta-Sanskrit' at an International Conference held at IIT - Mumbai, in 2013. I proposed that basic Sanskrit can be taught in 18 hours to those students who are really interested. My argument was supported by facts and figures which I collected during my classes. I got

a good feedback. The endeavor in this direction has taken shape in the form of this book.

**Numbers and Figures**

The essence of this book is that the information that we have gathered is in numbers and figures. Here are some interesting facts, and broad outlines adopted in preparing this book.

- The nouns that are *'a'kaaranta - halanta singular, shashti- saptami bahuvacana*, cover about 65%. About 18 words are introduced in this course, but 98% of the words can be recognised by the beginners as well!
- Eleven *sandhis* cover 98% of compound words. The *visarga-sandhi*, which is normally taught at the end, covers 46%.
- The *bahuvrihi-samasa* is found in Sanskrit language in a very large number, and it deserves special attention.
- In the present teaching method, stress is not given to *upapada-samasa,* though it is in usage.
- Persons who know other language than Sanskrit are familiar with its usage. However, Sanskrit has a different style. It has usage like *sati saptamai*, *shashti* is used for *krudanta*. A special chapter is provided for such usages.
- The use of *dwivachana* (dual number) is less used in Sanskrit. So this feature is taught at the second level.
- The use of *'uu'karanta shabda, shtutva sandhi, dwigu samasa* are rarely used. So these are not discussed here. One needs to refer to the other books for a complete understanding of the Sanskrit language

One important aspect should be noted. When a student learns a language through grammar, one needs to learn adjective – adjective-noun *(visheshana-visheshya)*; case (*vibhakti)*- number *(vacana)*; *kartru-karma* and so on. Many people feel that Sanskrit is a difficult language to learn. True; If we follow the old method of learning Sanskrit, it becomes more difficult. Hence to make things simple, we have adopted a new method here.

The first lesson introduces about 10 concepts with Kannada, Hindi and English examples. It is important to start teaching with the first lesson. Those who miss the first lesson find it difficult to follow the subsequent lessons. In 2013 a twelve-day workshop was conducted in the Evening Sanskrit College affiliated to Karnatak Sanskrit University, Bangalore. One person complained; "Oh! how much to remember, what a variety!". This was on the 10th or 11th day of the workshop. Later we learnt that he had missed the first two lessons. Other students who had attended all the classes did not face this problem.

We are placing this book in your hands. We are sure that you are an ardent lover of Sanskrit language. Make maximum use of this book. Please serve the cause of spreading Sanskrit and serve our nation, Bharat, as well.

**Prof. Dr. Tirumala P. Kulkarni**
tkulakarni@gmail.com

# For whom is this book meant?

**Have you studied Sanskrit?**

- If you know Sanskrit, then use this book to teach Sanskrit to others who are really interested in learning Sanskrit. You can teach them in a short time as the method involved here is very easy. In a family of Sanskrit scholars there may be children specialized in different fields. They may have a strong desire to learn Sanskrit. If you have such relatives, here is a simple way to teach them Sanskrit. Your long cherished dream can be realized by through this book.
- You know a little Sanskrit, but you do not have confidence to teach others. Then go through the portion of this book which is for a student and also which is meant for a teacher. You will get the required confidence to read Sanskrit texts. Read this with a companion, it is mutually beneficial.
- I read Sanskrit during my school days. Now I have forgotten. If you are in that category, this book definitely helps you. Go to a Sanskrit teacher and ask him to teach you with the help of this book.

**If you do not know Sanskrit ?**

- I have heard about Sanskrit. I am interested in learning Sanskrit. But I do not have much time to spare. Are you of that mental frame? Then go to a teacher. Let him introduce you to the first lesson. Then let him introduce *shabda-sandhi-samasa.* Read the shlokas given at the end of this book. You will understand Sanskrit. You will get a new experience.

- I have a strong desire to learn Sanskrit. I am ready to work hard. I do not know how to study? How much time I should spare to read? If they are your questions, then this book will be of immense use to you. Follow this book systematically with the help of a teacher. Then you can read Sanskrit texts of your choice. You will enjoy reading them. After a gap of four months read this book, revise this book. Your wish will be fulfilled.

**For school and college students .......**

Basically this book is designed for Adult Education. But, at the same time, this will be useful for school and college students who are learning Sanskrit at different levels. I have noticed that students find grammar lessons much easier after reading this book. They do not have confidence to read lessons which have prose and poetry passages. If at an early stage, we introduce the most frequently used *Shabda-Sandhi-Samasas*, the students not only get a new level of confidence, but also can read their texts independently. A girl studying in tenth standard came to me for guidance. After the results. she said, " I was expecting 100 out of 125 marks. After going through the lessons taught by you my confidence and ability to grasp the subject increased. Finally I scored 120 marks!" Interestingly the cover page of this book is designed by Anagha, that very girl!

**One suggestion:** The aim of this book is not to make people read and understand Sanskrit themselves. It is not as simple as that. The aim is those who do not have Sanskrit background can go to a teacher and read the Sanskrit text of their choice and understand every word in the text after going

through this book. Many have started reading Sanskrit with confidence after following this book. One need not doubt about the success of this scheme as we have already tried this on many aspirants and we have succeeded in our experiment.

**Time Factor**

**Another suggestion:** One may pose a question: "How much time is needed to get desired results from this book?" Time factor is also important. You require twelve to fifteen hours to complete this book. Those who are familiar with Sanskrit may take six to ten hours to complete this book. This time includes revision as well. To listen to 50 *shlokas* of *anustup chandas* of any text, one needs six to seven hours. Then this book can be revised for four to five hours. Afterwards one can move to listening the texts of other books.

One thing is true- listening to these lessons is not at all difficult. People find it difficult to spare some time and to do homework assigned by the teacher.

We only hope that you have no difficulty.

श्रीः

# सरल-कठिनसंस्कृतम्

## प्रथमपाठः - सर्वभाषासाधारणविषयाः

[ಈ ಪುಸ್ತಕದ ಮುಂದಿನ ಎಲ್ಲ ಪಾಠಗಳಲ್ಲಿ ವಿದ್ಯಾರ್ಥಿಭಾಗ ಮತ್ತು ಅಧ್ಯಾಪಕಭಾಗಗಳು ಬೇರೆ ಬೇರೆ ಇವೆ. ಈ ಮೊದಲಪಾಠದಲ್ಲಿ ಸ್ವಲ್ಪ ವ್ಯತ್ಯಾಸವಿದೆ. ಇದರಲ್ಲಿ ಚಿತ್ರರೂಪದಲ್ಲಿ ಇರುವುದು, ಹಾಗೂ ಆವರಣದೊಳಗಿನ ಎಲ್ಲವೂ ವಿದ್ಯಾರ್ಥಿಗಳಿಗಾಗಿ ಇರುವುದು. ಉಳಿದೆಲ್ಲವೂ ಅಧ್ಯಾಪಕರಿಗೆ ಸೂಚನೆಗಳು/ವಿವರಣೆಗಳು.

इस पहले पाठ में चित्ररूप में और बाक्सस् में जो दिया गया है वह छात्रों के लिए है. इस के अलावा बाकि सब अध्यापकों के लिए सूचनाएं है. अगले पाठों में दोनों के भाग अलग हैं.

In this first lesson diagrams and text in boxes are meant for students. Other part is guidelines for teachers. In subsequent lessons two parts are separately given.]

**अध्यापकसूचनाः**

संस्कृतपाठनाय समागतानां भवतां स्वागतम् ।

संस्कृतग्रन्थान् संस्कृते एव पठितुं यावत् संस्कृतज्ञानमावश्यकं तावतः पाठनाय अयं प्रयत्नः । अस्य नाम सरल-कठिनसंस्कृतम् इति । एतद्विषयसम्बन्धिनः विषयाः प्रास्ताविके परिशिष्टे च स्फुटाः ।

अस्माकमनुभवे इदमनुभूतं यत् कांश्चन विषयान् यदि मातृभाषायाः अथवा परिचितभाषायाः उदाहरणानां साहाय्येन पाठयामः तर्हि संस्कृतस्य पाठे आनुकूल्यं भवति । अत्र केचन विषयाः रेखात्मकपट्टिकासु चित्ररूपेण च कन्नड/हिन्दी/आङ्ग्लभाषाणामुदाहरणैः प्रस्तूयन्ते । तेषां पाठनाय मार्गदर्शिसूचनाः संस्कृते दीयन्ते ।

अध्यापकानां सामान्यसूचना – अस्माभिः विभिन्नछात्रेषु अनुष्ठितानां प्रयोगणाम् आधारेण अत्र काश्चन सूचनाः दत्ताः । यथा यथा प्रयोगाः कृताः तथा तथा छात्रैः प्रतिक्रियां प्राप्य, पाठकालेऽपि कुत्र कुत्र तैः क्लेशः अनुभूयते इति दृष्ट्वा तस्य परिहारोपायान् विचिन्त्य परिष्काराः विहिताः । आहत्य वर्षद्वये पञ्चषप्रयोगानां फलस्याधारेण इमाः सूचनाः दत्ताः । अस्माकं सर्वथा न

आग्रहः यत् अत्र दर्शितरीत्या एव पाठनीयमिति । अस्माकमनुभवः भाविपाठानां सहायः स्यात् इत्याशास्य अयं विभागः सज्जीकृतः । भवन्तः प्रार्थ्यन्ते यत् भवतामनुभवम् अस्मान् सूचयन्तु । अनुभवः यादृशोऽपि स्यात् । यथा – मया एवं कृतं तेन छात्राणां इतोऽपि सरलता जाता इति, पुस्तकसूचितात् मार्गात् भिन्नेन मार्गेण मया एवं कृतं; तेन एवमानुकूल्यं जातम् इति, अस्य अंशस्य योजने इतोऽपि उपयोगिता वर्धते इति वा ।

आगामिपाठेषु यद्यत् फलतया निर्दिष्टं यावांश्च कालः सूचितः न्यूनाधिकतया तावति काले तत्फलं अस्माकं प्रयोगेषु छात्रैः प्राप्तम् । अतः अध्यापकानां तत्र अविश्वासः मास्तु । किञ्च, अनया सरल-कठिनसंस्कृतप्रणाल्या पाठिताः छात्राः स्वयं सर्वं अवगन्तुं, स्वयं ग्रन्थान् पठित्वा अर्थं ज्ञातुं प्रभवन्ति इति नार्थः । केचन छात्राः तादृशं फलं काङ्क्षेयुः ! किन्तु, यदत्र पाठेषु फलं तत् आदौ अध्यापकसाहाय्येनैव भवति । क्रमेण स्वयमपि भवति इति स्वयं मनसि कृत्वा छात्राणां मनस्यपि संस्थाप्य पाठे प्रवर्त्यताम् ।

यत्र 'अधिकमवधानं मास्तु' इत्युक्तं तस्य अयमर्थः यत् प्रथमस्तरे अवधानं मास्तु इति । यदा द्वितीयवारं तृतीयवारं वा आवृत्तिः क्रियते तदा सोऽपि विषयः सम्यक् परिचायनीयः ।

अस्य पाठस्य पाठनाय अपेक्षितसमयः – २/२.३० घण्टा

फलम् - छात्राः सर्वभाषासम्बन्धिनः एकादश अंशान् आत्मसात् कुर्वन्ति ।

वैशिष्ट्यम् – कारकाणां विषयस्य पाठार्थं एकघण्टाधिकसमयः अपेक्ष्यते । अनेन भाषारहस्यमवगतं भवति । विशेषण-विशेष्य-प्रत्याहाराणां विषयोऽपि एवमेव अग्रे संस्कृताध्ययने साहाय्यमाचरति । अस्मिन् पाठे कतिपयानां चित्राणामुपयोगः अधिकतया कृतः । इतरवाक्य-विषयाणामवगमनेऽपि चित्राणां रचनं छात्रैः कार्यते चेत् स्पष्टताधिक्यं सम्पाद्यते ।

## I पद - वाक्य

| *भाषा = वाक्यसमूह* | *वाक्य = पदसमूह* | *पद = सार्थक -वर्णसमूह* |
|---|---|---|

| पद | अपद |
|---|---|
| पेड-जल-घर | डपे-लज-कगडप |
| tree-water-home | eert-retaw-bvnc |
| ಮರ-ಬಳ್ಳಿ-ನೀರು-ಮೀನು | ರುನೀ- ಳ್ಳಿಬ-ನಮರತ |

## II पदविभाग




| क्रियाबोधक पद = क्रियापद | ಮಾಡುತ್ತಾನೆ, ನೋಡುತ್ತಾಳೆ, ಓಡಾಡುವ, ತಿಂದು | करता है, बोलती है, जाना, खा कर, पढने के लिए | reads, walked, to do, while doing |
|---|---|---|---|
| वस्तु अथवा व्यक्ति बोधक पद = नामपद | ನೀರು, ಮನೆ, ತಪಸ್ಸು | पेड-जल-घर | tree-water-home |
| सङ्ख्या-लिङ्गरहित पद = अव्यय | ಹೇಗೆ-ಏಕೆ-ಮತ್ತೆ | और-क्यूं-कैसे | how-why-and |




| क्रिया-काल-सङ्ख्याबोधकपद = प्रधानक्रियापद | ಮಾಡುತ್ತಾನೆ, ನೋಡುತ್ತಾಳೆ | करता है, बोलती है | reads, walks |
|---|---|---|---|

| एकवाक्य --> | एकप्रधानक्रियापद |
|---|---|
| प्रधानक्रियापद = | वाक्यकेन्द्रबिन्दु |

एतैः पदैः वर्तमानकालस्य एकत्वसङ्ख्यायाः च ज्ञानं भवति ।

एकस्मिन् वाक्ये प्रधानक्रियापदम् **एकमेव भवति** । अग्रे कारकविषये प्रदर्शितानां वाक्यानां मध्यात् कानिचित् वाक्यानि श्रावयत ।

| काल-सङ्ख्यारहितक्रियाबोधकपद = अप्रधानक्रियापद | ಓಡಾಡುವ, ತಿಂದು, ಓದಿ | जाना, खा कर, पढने के लिए | to do, while doing, after reading |
|---|---|---|---|

वाक्यस्य सर्वाणि पदानि इदं पदं योजयति। श्रावितवाक्येषु एकं द्वयं वा उदाहरणरूपेण दर्शयत।

एतैः पदैः कालस्य सङ्ख्यायाः वा ज्ञानं न भवति । एकस्मिन् वाक्ये एतावन्त्येव पदानि भवेयुः इति नियमः नास्ति ।

सूचना - भाषापाठनकाले आकाङ्क्षाक्रमस्य उपयोगः बहुलाभकरः । आकाङ्क्षाक्रमः नाम - प्रथमतः क्रियापदं स्वीकृत्य तदुपरि कः/का? कं? केन? कुत्र? इत्यादिप्रश्नान् पृष्ट्वा उत्तररूपेण वाक्यस्थानि इतरपदानि वक्तव्यानि । उदा.

1ರಾಮನು 2ರಾವಣನನ್ನು 3ಲಂಕೆಯಲ್ಲಿ 4ಬಾಣಗಳಿಂದ 5ಸಂಹರಿಸಿದನು.
1राम 2रावण को 3लंका में 4बाणों से 5मारा.
1Rāma 5killed 2Rāvaṇa 3in Lankā 4by arrows.

रामः लङ्कायां बाणेन रावणं हतवान् - इति वाक्यम् । अत्र हतवान् इति क्रियापदम् । कः हतवान्? - रामः हतवान् । कं हतवान्? - रावणं हतवान् । केन हतवान्? - बाणेन हतवान् । कुत्र हतवान्? - लङ्कायां हतवान् - इति । एवं बहूनि वक्यानि श्रावयित्वा तत्रत्यक्रियापदानि स्वीकृत्य, के? कुत्र? इत्यादि पृष्ट्वा छात्रैः उत्तराणि वाचयन्तु ।

सौलभ्याय पदविश्लेषणे वाक्यविश्लेषणे च चिह्नानामुपयोगं कुर्मः । तत्रैवं चिह्नक्रमः (विशेषण-विशेष्ययोः विवरणमग्रे वर्तते ) –

विशेषण -  विशेष्य -  क्रियापद – 

विशेषण+क्रियापद –  सम्बन्ध सूचक - 

सामान्यतः वाक्यस्य चित्ररूपेण प्रस्तुतिः एवं भवति –




## III नामविशेषण-क्रियाविशेषण-विशेष्य

| प्रश्न -> उत्तर | पदप्रभेद |
|---|---|
| कैसे? ಹೇಗೆ? How? | क्रियाविशेषण |
| किस तरह का?/ कितना? Which type of?/ How much? ಎಂತಹ?/ ಎಷ್ಟು? | नामविशेषण |
| अन्य सर्व | विशेष्य |

आकाङ्क्षाक्रमे कथम्? इति प्रश्नस्य उत्तरं क्रियाविशेषणम् । कीदृशम्? कति? इति प्रश्नयोः उत्तरं नामविशेषणम् । अप्रधानक्रियापदान्यपि कदाचित् विशेषणानि भवन्ति ।

अन्यानि सर्वाणि, विना अव्ययानि, विशेष्याणि ।

## अधस्तनवाक्येषु नामविशेषण-क्रियाविशेषण-विशेष्याणि लक्ष्यत ।

*1 ಕೋಗಿಲೆಯು 2 ವಸಂತಮಾಸದಲ್ಲಿ 3 ಇಂಪಾಗಿ 4 ಹಾಡುತ್ತದೆ.*

*1 कोयल 2 वसंतमास में 3 मधुर 4 गाती है.*

1Cuckoo 3sweetly 4sings 2in the spring.




*1 ಓಡುತ್ತಿರುವ 2 ರೈಲನ್ನು 3 ಹತ್ತಬಾರದು.*

*1 दौडते हुए 2 रेल में 3 नहीं चढना चाहिये.*

One 3should not catch 1the running 2train.




*ಗಟ್ಟಿಯಾಗಿ ಕಿರುಚುವುದರಿಂದ ಬೇರೆಯವರಿಗೆ ತೊಂದರೆಯಾಗುತ್ತದೆ.*

*जोर से चिल्लाने से दूसरों को तकलीफ होती है.*

Screaming loudly troubles others.

*ಸುಂದರ ಹೂಗಳಿಂದ ಉದ್ಯಾನ ಆಕರ್ಷಕವಾಗಿದೆ.*

*खूबसूरत फूलों से पार्क आकर्षक है.*

Park is attractive by beautiful flowers.

*ದಪ್ಪ ಬಟ್ಟೆಗಳು ಚಳಿಗಾಲದಲ್ಲಿ ಬೇಗ ಒಣಗುವುದಿಲ್ಲ.*

*मोटे कपडे सर्दी में जल्दी नहीं सुखते हैं.*

Thick cloths won't get dry early in winter.

## IV विभक्ति

*रामशब्दस्य विविधरूपाणि परिशीलयन्तु–*

| | | |
|---|---|---|
| 1 राम | ರಾಮನು | Rāma (before a verb in active voice ex. Rāma killed Rāvaṇa) |
| 2 राम को | ರಾಮನನ್ನು | Rāma/to Rāma (after a verb in active voice ex. Hanuman sees/gives Rāma/to Rāma) |
| 3 राम से | ರಾಮನಿಂದ | by/with Rāma |
| 4 राम के लिए | ರಾಮನಿಗೆ/ರಾಮನಿಗಾಗಿ/ ರಾಮನಿಗೋಸ್ಕರ | for Rāma |
| 5 राम की अपेक्षा | ರಾಮನಿಗಿಂತ/ ರಾಮನ ದೆಸೆಯಿಂದ | from/than Rāma |
| 6 राम का | ರಾಮನ | of Rāma/Rāma's |
| 7 राम में | ರಾಮನಲ್ಲಿ | in/on Rāma |

एवमेव कवि-सीता-पुस्तकादिशब्दानां रूपाणि वाचयन्तु –

| | | |
|---|---|---|
| Boy/to boy/by boy/for boy | बालक/बालक को/बालक से/ | ಕವಿ/ಕವಿಯು/ಕವಿಯನ್ನು/ಕವಿಯಲ್ಲಿ |
| Seeta/to Seeta/by Seeta | सीता/सीता से/सीता के लिए | ಸೀತೆ/ಸೀತೆಯು/ಸೀತೆಯನ್ನು/ಸೀತೆಯಲ್ಲಿ |
| Book/to book/for book/ | किताब/किताब में/किताब की अपेक्षा | ಬಿಲ್ಲು/ಬಿಲ್ಲನ್ನು/ಬಿಲ್ಲಿನಿಂದ/ಬಿಲ್ಲಿನಲ್ಲಿ |

मूलतः राम इति शब्दस्य तत्तद्भाषाभेदेन किञ्चित्-शब्द-योजने अर्थव्यत्यासः भवति । कन्नडभाषायां लिङ्गमपि ज्ञायते । योजिताः शब्दाः विभक्तयः इति कथ्यन्ते । एतासां ज्ञानं यावत् दृढं भवति तावत् भाषाध्ययनं सुलभं भवति । अग्रे कारकविषयज्ञानाय अपि आनुकूल्यं भवति ।

अत्र प्रदर्शितरीत्या कण्ठस्थीकारयन्तु –

| | | |
|---|---|---|
| Prathamaa - before_the_verb | प्रथमा - ० | ಪ್ರಥಮಾ ಉ |
| Dviteeyaa - after_the_verb/to | द्वितीया - को | ದ್ವಿತಿಯಾ ಅನ್ನು |
| Truteeyaa - by | तृतीया - से | ತೃತಿಯಾ ಇಂದ |
| Chaturthii - for | चतुर्थी–से/के_लिए | ಚತುರ್ಥೀ ಗೆ/ಗೋಸ್ಕರ |
| Panchamii - from | पंचमी - की अपेक्षा | ಪಂಚಮೀ ಗಿಂತ/ದೆಸೆಯಿಂದ |
| Shashthii - of/'s | षष्ठी का | ಷಷ್ಠೀ ದ/ನ/ಗಳ/ಯ/ರ (ಗೆಳೆಯರ ದನ!) |
| Saptamii - in/on | सप्तमी में | ಸಪ್ತಮೀ ಅಲ್ಲಿ |

## V वचन

नामपदैः क्रियापदैश्च सङ्ख्याज्ञानं भवति इति पूर्वं वयं दृष्टवन्तः । तत्र एकत्वबोधे एकवचनम् । एकाधिकबोधे बहुवचनम् । संस्कृते द्विवचनं वर्तते । तत् तत्रैव पश्याम ।

| | | | |
|---|---|---|---|
| एकवचन | Boy-girl-vehicle/ reads/walks | बालक-महिला/लिखता है-खेलती है | ಮರ, ಮಹಿಳೆ/ ಓದುತ್ತಾನೆ, ತಿನ್ನುತ್ತಾನೆ |
| बहुवचन | Boys-girls-vehicles/ read/walk | बालके-महिलाएं/लिखतें हैं-खेलतें हैं | ಮರಗಳು,ಮಹಿಳೆಯರು/ ಓದುತ್ತಾರೆ, ತಿನ್ನುತ್ತಾರೆ |

## VI लिंग

पुल्लिंगं, स्त्रीलिंगं नपुंसकलिंगमिति शब्देषु त्रीणि लिंगानि सन्ति । कन्नडभाषायां, प्रायः आङ्ग्लभाषायां च लिंगव्यवस्था अर्थाधारिता । संस्कृते इव हिन्दीभाषायां शब्दाधारिता ।

| | | | |
|---|---|---|---|
| पुल्लिग | पुरुष-बालक | Boy-man | ಹುಡುಗನು, ಧೈರ್ಯವಂತನು |
| स्त्रीलिंग | बालिका-गाडी-तबियत | Girl-woman | ಹುಡುಗಿಯು, ಧೈರ್ಯವಂತಳು |
| नपुंसकलिंग | ------ | House-sand | ಮರ, ಕೋಣ, ಎತ್ತು |

कन्नडे हिन्द्यां च क्रियापदैरपि लिंगबोधः भवति ।

| | |
|---|---|
| बालक लिखता है | ಹುಡುಗನು ಬರುತ್ತಾನೆ |
| बालिका लिखती है | ಹುಡುಗಿಯು ಬರುತ್ತಾಳೆ. |
| घर दिखता है | ಹಸುವು/ಎತ್ತು ಬರುತ್ತದೆ. |

आङ्ग्लभाषायां न भवति ।

| | |
|---|---|
| Boy-girl-vehicle | reads/walks/goes |

## VII कारक

[अध्यापकानां विशेषसूचना – अयं प्रमुखः घट्टः । अत्यन्तनूतनानां ४५ निमेषाः अपेक्षिताः भवेयुः । अस्मिन् विषये छात्राणाम् आत्मविश्वासोत्पादनम् अध्यापकानां निकषोपलम् । अस्य भागस्य पाठे फलकमुपयुज्यते चेत् बहु सौकर्यं भवति ।]

संस्कृतस्य व्याकरण-न्याय-मीमांसाशास्त्रैः भाषाक्षेत्रस्य कृते दत्तममूल्यम् उपायनं – कारकव्यवस्था । यद्येषा आत्मसात्कृता तर्हि भाषाणां रहस्यम् अवगतं भवति । इदं वाक्यं परिशीलयत –

ರಾಮನು ರಾವಣನನ್ನು ಲಂಕೆಯಲ್ಲಿ ಬಾಣಗಳಿಂದ ಸಂಹರಿಸಿದನು.
राम ने रावण को लंका में बाणों से मारा.
Rāma killed Rāvaṇa in Lankā by arrows.

इदानीमस्य वाक्यस्य परिशीलनं कुर्मः । इदं वाक्यं किं वदति? इति पृष्टे किमुत्तरं स्यात् ?

ರಾಮನು ರಾವಣನನ್ನು ಲಂಕಾದಲ್ಲಿ ಬಾಣಗಳಿಂದ ಕೊಂದ.
राम ने रावण को लंका पे तीरों से मार डाला
Rāma finished Rāvaṇa in the city of Lankā by arrows.

इति समानार्थकं अन्यद्वाक्यमुच्येत ! यदि भाषा/व्याकरणयोः परिचयस्स्यात् तर्हि विश्लेषणं स्यात् - ಸಂಹರಿಸಿದನು/मारा/killed इति क्रियापदम् । अन्यानि पदानि अमुकलिंग-वचन-विभक्तिषु वर्तन्ते इति । सामान्यतः वाक्यविश्लेषणं व्याकरणेषु अत्र स्थगितं भवति । संस्कृतव्याकरणग्रन्थस्य अष्टाध्याय्याः रचयितारः पाणिनिमहर्षयः कारकव्यवस्थायाः द्वारा भाषाविश्लेषणपथं प्रदर्शितवन्तः । तैः किमुच्यते इति परिशीलयाम ।

सामान्यतः सर्वं वाक्यं कांचित् क्रियां वदति । यथा उपरितनवाक्यं हननक्रियां वक्ति । क्रियायाः निष्पत्त्यर्थं नैकेषां पदार्थानां/व्यक्तीनाम् आवश्यकता भवति । पूर्वोदाहृतवाक्ये –

| ಸಂಹರಿಸುವುದು/मारना/killing | क्रिया |
|---|---|
| ಅದನ್ನು ಮಾಡುವವನು/उस को करनेवाला/doer of the action | राम |
| ಯಾರನ್ನು ಸಂಹರಿಸುವುದು/किस को मारना/killing whom | ರಾವಣನನ್ನು/रावण को/Rāvaṇa |
| ಎಲ್ಲಿ ಸಂಹರಿಸುವುದು/कहां मारना/killing where | ಲಂಕೆಯಲ್ಲಿ/लंका में/in Lankā |
| ಯಾವುದರಿಂದ ಸಂಹರಿಸುವುದು/किस से मारना/killing by what | ಬಾಣಗಳಿಂದ/बाणों से/by arrows |

अन्यत् उदाहरणं विश्लेषयाम –

ದೇಶದ ಪ್ರಜಾಪ್ರಭುತ್ವಕ್ಕಾಗಿ ಎಲ್ಲರೂ ಮತದಾನವನ್ನು ಮಾಡಬೇಕು.
देश के प्रजातंत्र के लिए सब मतदान करें.
Everybody should cast voting for the sake of democracy of the nation.

| ಮಾಡುವುದು/करना/doing | ಕ್ರಿಯೆ/क्रिया/action |
|---|---|
| ಯಾರು/कौन/who | ಎಲ್ಲರೂ/सब/everybody |
| ಏನನ್ನು/क्या/what | ಮತದಾನವನ್ನು/मतदान/voting |
| ಏತಕ್ಕಾಗಿ/किस के लिए/for what | ಪ್ರಜಾಪ್ರಭುತ್ವಕ್ಕಾಗಿ/ प्रजातंत्र के लिए/ for the sake of democracy |

| ಯಾರ-ಯಾವುದರ ಪ್ರಜಾಪ್ರಭುತ್ವ/किस का प्रजातंत्र/who's democracy | ದೇಶದ/देश का/nation's |
|---|---|

पुनरन्यत् उदाहरणं -

ಚಳಿಗಾಲದಲ್ಲಿ ಮರದಿಂದ ಎಲೆಗಳು ಉದುರುತ್ತವೆ.
ठंड काल में पेड से पतें गिरते हैं.
Leaves fall from trees in winter.

| ಕ್ರಿಯೆ/क्रिया/action | ಉದುರುವುದು/गिरना/falling |
|---|---|
| ಯಾವುದು/क्या/what | ಎಲೆಗಳು/पत्तें/leaves |
| ಎಲ್ಲಿಂದ/कहां से/from where | ಮರದಿಂದ/पेड से/from trees |
| ಯಾವಾಗ/कब/when | ಚಳಿಗಾಲದಲ್ಲಿ/ठंड काल में/in winter |

एकस्याः क्रियायाः निष्पत्तये यत् यत् अपेक्षितं तत्सर्वं कारकम् । कारकशब्दस्य द्वेधा विवरणमस्ति । १. क्रियासम्बन्धि २. क्रियाजनकम् । तत्र

| ಕ್ರಿಯೆಯನ್ನು ನಡೆಸುವವರು/क्रियानिष्पादक/doer of action | ಕರ್ತಾ-ಕರ್ತೃಕಾರಕ/ कर्ता-कर्तृकारक/ kartā- kartṛkāraka |
|---|---|
| ಯಾರನ್ನು-ಯಾವುದನ್ನು ಉತ್ತರ/ किस को प्रश्न का उत्तर/the answer to the question `to whom-whom' | ಕರ್ಮ/कर्म/karma |
| ಯಾವುದರಿಂದ ಉತ್ತರ/किस से उत्तर/answer of by what | ಕರಣ-ಹೇತು/ करण-हेतु/ karaṇa-hetu (instrument-cause) |
| ಯಾರಿಗೆ ಉತ್ತರ/किस के लिए उत्तर/answer of for what | ಸಂಪ್ರದಾನ-ತಾದರ್ಥ್ಯ/ संप्रदान-तादर्थ्य/ saṃpradāna-tādarthya |
| ಎಲ್ಲಿಂದ ಉತ್ತರ/कहां से उत्तर/answer to from where | ಅಪಾದಾನ/ अपादान/ apādāna |
| ಎಲ್ಲಿ ಉತ್ತರ/कहां उत्तर/answer to where | ಅಧಿಕರಣ/ अधिकरण/ adhikaraṇa (location) |

इदं चित्ररूपेण प्रदर्शने एवं दृश्यते –









केचन अवधेयाः अंशाः – अवान्तरव्यापारसद्भावे करणम्, अन्यथा हेतुः । उदा. 'लेखन्या लिखति' अत्र लेखन्याः व्यापारो वर्तते । अतः लेखनी करणम् । 'पुष्पं सौन्दर्येण मनः आकर्षति' अत्र सौन्दर्यं हेतुः । यतः सौन्दर्यस्य कोऽपि व्यापारः नास्ति ।

| करण (व्यापारसहित) | चमच से खाता है/He eats with a spoon/ಚಮಚದಿಂದ ತಿನ್ನುತ್ತಾನೆ |
|---|---|
| हेतु (व्यापाररहित) | फूल सौन्दर्य से मन को आकर्षित करता है/A flower attracts by it's beauty/ಹೂವು ಸೌಂದರ್ಯದಿಂದ ಮನ ಸೆಳೆಯುತ್ತದೆ. |

| सम्प्रदान | केवल दानक्रियासम्बन्धि |
|---|---|
| तादर्थ्य | अन्यक्रिया उद्देश्य |

सम्प्रदानमिति नाम्ना एव ज्ञायते यत् इदं कारकं दानक्रियामात्रसम्बन्धि । दानेतरक्रियायां तादर्थ्यं भवति । तादर्थ्यं = क्रियायाः उद्देश्यम् । तादर्थ्यं न कारकं, यतः क्रियासमाप्त्यनन्तरं सम्भवत् उद्देश्यं क्रियाजनकरूपं कारकं न भवितुमर्हति ।

कन्नडभाषायां 'ಮಕ್ಕಳಿಗೆ ಕಥೆಗಳನ್ನು ಹೇಳುತ್ತಾರೆ' `ಹುಡುಗರು ಶಾಲೆಗೆ ಹೋಗುತ್ತಾರೆ' कथन-गमनवाचकक्रियापदस्थले 'ಯಾರನ್ನು ಕುರಿತು?' इति प्रश्नः करणीयः । लभ्यमुत्तरं कर्म भवति ।

**षष्ठी - कारक**

एवं षट् एव कारकाणि । स्थूलतया वक्तव्यं चेत् षष्ठी कारकं न वक्ति । अत एव –

| 1ದೇಶದ 2ಪ್ರಜಾಪ್ರಭುತ್ವಕ್ಕಾಗಿ 3ಎಲ್ಲರೂ 4ಮತದಾನವನ್ನು 5ಮಾಡಬೇಕು.<br>1देश के 2प्रजाप्रभुत्व के लिए 3सब 4मतदान 5करें.<br>3Everybody 5should do 4voting 2for the sake of democracy 1of the nation. |
|---|

इति वाक्ये देशस्य न साक्षात् क्रियया सह अन्वयः । एतेषां वाक्यानां चित्राणि विलिख्य कथमत्र षष्ठी न कारकं वक्ति इति स्पष्टता प्राप्यताम् ।




एषु स्थलेषु षष्ठी कारकसम्बन्धिनं वदति । 'सम्बन्धसामान्ये षष्ठी' इत्येव व्याकरणे प्रसिद्धिः ।

Rāma the son of Daśaratha punished Rāvaṇa.

दशरथ के पुत्र राम रावण को दण्ड दिया.

ದಶರಥನ ಮಗನಾದ ರಾಮ ರಾವಣನನ್ನು ಶಿಕ್ಷಿಸಿದ.

Even students of schools took part in struggle for indipendence.

स्वातंत्र्यसंग्राम में शालाओं के बालक ने भी भाग लिए थे.

ಸ್ವಾತಂತ್ರ್ಯಸಂಗ್ರಾಮದಲ್ಲಿ ಶಾಲೆಯ ಮಕ್ಕಳೂ ಭಾಗವಹಿಸಿದ್ದರು.

'ಮಕ್ಕಳ ಗಾಯನ' 'ಪುರಾಣದ ಶ್ರವಣ' 'ರಾಜ್ಯದ ವಿಭಜನೆ'

children's singing, bifurcation of state

बच्चों का गाना, पुराण का श्रवण, राज्य का विभजन




अत्र षष्ठी कर्तृ-कर्मकारकमपि वदति । तर्हि कथं निर्णयः ? क्रियावाचकपदैः सह प्रयोगे कारकषष्ठी; अन्यथा सम्बन्धषष्ठी ।

## अर्थ से वाक्य - Meaning to sentence- ಅರ್ಥದಿಂದ ವಾಕ್ಯ

एतावत्पर्यन्तं वाक्यतः अर्थः कथं निरूप्यते इति ज्ञातम् । इदानीम् अर्थतः वाक्यरचनां पश्याम । अनेन भाषायाः रहस्यं पूर्णतया अवगतं भवति ।

*Frame a sentence in English based on the information given below –*
*नीचे दिये गये विवरण की सहायता से हिंदी में वाक्य बनाइए-*
*ಇಲ್ಲೊಂದಿಷ್ಟು ಮಾಹಿತಿ ಇದೆ. ಇದನ್ನು ಬಳಸಿ ಕನ್ನಡದಲ್ಲಿ ಒಂದು ವಾಕ್ಯವನ್ನು ರಚಿಸಿ---*

| | |
|---|---|
| Action<br>क्रिया<br>ಕ್ರಿಯೆ | Eating<br>खाना<br>ತಿನ್ನುವುದು |
| Time of action<br>क्रिया का काल<br>ಕ್ರಿಯೆಯ ಕಾಲ | Present<br>वर्तमान<br>ವರ್ತಮಾನ |
| Kartaa<br>कर्ता<br>ಕರ್ತೃ | Monkey<br>बंदर<br>ಕಪಿ |
| Number of Kartaa<br>कर्तृसंख्या<br>ಕರ್ತೃಸಂಖ್ಯೆ | One<br>एक<br>ಒಂದು |
| Karma<br>कर्म<br>ಕರ್ಮ | Fruit<br>फल<br>ಹಣ್ಣು |
| Karana/करण/ಕರಣ | Hand/हाथ/ಕೈ |
| Adhikarana<br>अधिकरण<br>ಅಧಿಕರಣ | Tree<br>पेड<br>ಮರ |

Monky eats fruit by a hand on the tree – Is this sentence formed?
बन्दर पेड में हाथ से फल खाता है – क्या यह वाक्य बना?
ಕಪಿಯು ಮರದಲ್ಲಿ ಕೈಯಿಂದ ಹಣ್ಣನ್ನು ತಿನ್ನುತ್ತದೆ - ಎಂಬ ವಾಕ್ಯ ಮೂಡಿ ಬಂತೆ?

Congrats! You have understood the theory of Kaaraka. You have understood the secret of linguistics! This is the real language analysis. This is called as Knowledge Representation. This is what reveled by Rick Briggs in 1985. For details see the web.

अभिनंदन! आप कारकव्यवस्था को जानते हैं. भाषाशास्त्र के मुख्य रहस्य आप को पता चला है. यह सही भाषाविश्लेषण है. इस को Knowledge Representation कहते हैं. १९८५में रिक् ब्रिग्स् इस तथ्य का आविष्कार किया था. अधिक जानकारी के लिए इंटरनेट देखिए.

ಅಭಿನಂದನೆಗಳು!! ನಿಮಗೆ ಕಾರಕ ವ್ಯವಸ್ಥೆ ಅರ್ಥವಾಗಿದೆ. ಭಾಷಾಶಾಸ್ತ್ರದ ಬಹುದೊಡ್ಡ ರಹಸ್ಯ ನಿಮಗೆ ತಿಳಿಯಿತು. ಇದು ನಿಜವಾದ ಭಾಷಾವಿಶ್ಲೇಷಣೆ. ಇದೇ Knowledge Representation. ರಿಕ್ ಬ್ರಿಗ್ಸ್ ೧೯೮೫ ರಲ್ಲಿ ಹೇಳಿದ್ದು ಇದನ್ನೇ. ಹೆಚ್ಚಿನ ವಿವರಣೆಗೆ ಅಂತರ್ಜಾಲದಲ್ಲಿ ಹುಡುಕಿ.

## कारकविभक्ति

अपरमेकं मुख्यं विषयं परिशीलयित्वा कारकविचारं समापयाम ।

यथा पूर्वं दर्शितं कारकाणि षट् । विभक्तयस्तु सप्त । कारकाणां विभक्तीनां च सम्बन्धः अस्ति ।

इमां पट्टिकां पश्यत –

| सप्तमी | ಅಲ್ಲಿ/में/in-on---> | अधिकरणकारकम् |
|---|---|---|
| चतुर्थी | ಗೆ-ಗೋಸ್ಕರ/के लिए/for ----> | सम्प्रदानकारकम् / तादर्थ्यम् |
| द्वितीया | ಅನ್ನು/को/to -----> | कर्मकारकम् |

एतावत् निश्चितम् । अत्र व्यत्यासः नास्ति ।

| ‘ನನ್ನ **ಹಿಂದೆ** ಬಹಳ ಜನ ಇದ್ದಾರೆ’ ‘ನೀನು **ಬಹುಕಾಲ** ಬಾಳು’ | ? कारक |
|---|---|
| मेरे **पीछे** ज्यादा लोग हैं. आप बहुकाल जीओ. | ? कारक |
| There are many people **behind** me. | ? कारक |

एषु वाक्येषु ಹಿಂದೆ- ಬಹುಕಾಲ, पीछे- बहुकाल, behind इति पदेषु विभक्तिः न दृश्यते । तेन किं कारकमिति लक्ष्यीकरणे क्लेशः भवति । इदं किं कारकम्? अधिकरणकारकम् !

ಹಿಂದೆ = ಹಿಂಭಾಗದಲ್ಲಿ, ಬಹುಕಾಲ = ಬಹುಕಾಲದ ವರೆಗೆ = ಬಹುಕಾಲದಲ್ಲಿ.
पीछे = पीछे के जगह में. बहुकाल = बहुकाल तक = बहुकाल में.
Behind = **in** a particular place.

*अधिकरण*




एतावता क्वचित् देश-कालाधिकरणवाचिपदेषु विभक्तिः न भवति – इति अवधेयम् ।

## ಇಂದ-से समस्यापरिहार

एका समस्या कन्नड-हिन्दीभाषयोः भवति -

| ಬಾಣಗಳಿಂದ ಕೊಂದನು/तीरों से मारा | ಇಂದ/से - तृतीया----> | विश्लेष ✗ | करणकारक |
|---|---|---|---|
| ಮರದಿಂದ ಎಲೆ ಬಿತ್ತು/पेड से पत्ता गिरा | ಇಂದ/से- पंचमी-----> | विश्लेष ✓ | अपादान-कारक |

यत्र विश्लेषः (ಬೇರ್ಪಡುವಿಕೆ/अलह होना/separation) भवति तत्र पंचमी. किंच, ಎಲ್ಲಿಂದ?/कहां से इति प्रश्नस्य चेत् उत्तरं तर्हि अपादानम् । अन्यथा करणम् ।

आंग्लभाषायां तु करणे by, अपादाने from भवति । तेन समस्या नास्ति ।

## कर्म (कर्मणि) प्रयोग (Passive voice)

इदं वाक्यं परिशील्यताम् -

| | |
|---|---|
| ರಾವಣನು ರಾಮನಿಂದ ಕೊಲ್ಲಲ್ಪಟ್ಟ. | ? कारक |
| रावण **राम से** मारा गया | ? कारक |
| Rāvaṇa was killed **by Rāma** | ? कारक |

अत्र रामः किं कारकम्? करणम्? न, यतः सः हननक्रियायां न Instrument! कर्ता ? आम् ! तदेवं कर्ता तृतीयायां, कर्म प्रथमायां विभक्तौ भवति चेत् कर्मणिप्रयोगः इति कथ्यते ।

| | | |
|---|---|---|
| ರಕ್ಷಿಸಲ್ಪಟ್ಟನು-ರಕ್ಷಿಸಲ್ಪಡುತ್ತಾನೆ | रक्षित किया जाता है | will be protected |

| | | | |
|---|---|---|---|
| कर्मणि प्रयोगसूचक | ಪಟ್ಟ-ಪಡು<br>या जाना<br>to be + verb(n/d) | कर्ता – तृतीया | कर्म - प्रथमा |

इदानीं प्रथमा षष्ठी च उर्वरिते । व्याकरणरीत्या प्रथमा किमपि कारकं न वक्ति । प्रायः कर्ता, कर्मणि प्रयोगे कर्म च प्रथमया बोध्यते ।

षष्ठीविषये पूर्वमुक्तम् । क्रियावाचकपदैः सह प्रयोगे कारकषष्ठी; अन्यथा सम्बन्धषष्ठी ।

| **कारक-विभक्तीनां सम्बन्धः** | | **विभक्ति-कारकाणां सम्बन्धः** | |
|---|---|---|---|
| कर्ता | प्रथमा/तृतीया | प्रथमा | (कर्ता)/(कर्मणि प्रयोगे) कर्म |
| कर्म | द्वितीया/प्रथमा | द्वितीया | कर्म |
| करणम् | तृतीया | तृतीया | करणम्/कर्ता/हेतुः |
| संप्रदानम् | चतुर्थी | चतुर्थी | सम्प्रदानम्/तादर्थ्यम् |
| अपादानम् | पंचमी | पंचमी | अपादानम् |
| | | षष्ठी | ------/कर्ता/कर्म |
| अधिकरणम् | सप्तमी | सप्तमी | अधिकरणम् |

## महावाक्यविश्लेषण

[एतावत्पर्यन्तम् अभ्यस्तान् *नामपदं, अव्ययं, प्रधानक्रियापदम्, अप्रधानक्रियापदं, क्रियाविशेषणं, नामविशेषणं, कारकाणि* इति व्याकरणांशान् अधोदत्तवाक्ये यथा छात्राः स्वयं लक्षयेयुः तथा अध्यापकाः साहाय्यं कुर्युः । आदौ 'अत्र प्रधानक्रियापदं किम्?' इति प्रश्नं पृष्ट्वा तैरेव 'ಪಾಲಿಸಿದನು/ ruled/ पाला' इति उत्तरं वाचनीयम् । तदनु कः? कान्? कथम्? कुत्र? इत्यादि प्रश्नान् तैरेव कारयित्वा 'रामः अयोध्यायां बहुकालं प्रजाः सम्यक् अपालयत्' इति प्रधानवाक्यं समापनीयम् । तदनु 'कः प्रश्नः क्रियते चेत् पूर्वभागस्य सम्बन्धः भवति?' इति पुनः पुनः पृष्ट्वा 'कीदृशः?' इति प्रश्नः 'पुत्रः, पतिः, संहर्ता, मारयिता' इति उत्तराणि वाचयित्वा, तत्र पुनः 'कस्य? कस्याः?, कम्? किमर्थम्? कुत्र? कीदृशम्?' इति प्रश्नान् उत्तराणि च वाचयित्वा समग्रवाक्यस्य एकवाक्यता यथा तेषां मनसि दृढा भवेत् तथा विश्लेषणं करणीयम् ।]

ದಶರಥನ 2 ಮಗನಾದ, ಸೀತಾಮಾತೆಯ ಪತಿಯಾದ, 4 ಕಿಷ್ಕಿಂಧೆಯಲ್ಲಿ ಸುಗ್ರೀವನಿಗಾಗಿ ವಾಲಿಯನ್ನು 3 ಕೊಂದ, ಲಂಕೆಯಲ್ಲಿ ರಾಕ್ಷಸರನ್ನು ಮತ್ತು ದುಷ್ಟನಾದ ರಾವಣನನ್ನು 6 ಲೀಲಾಜಾಲವಾಗಿ 5 ಸಂಹರಿಸಿದ, ರಾಮನು ಅಯೋಧ್ಯೆಯಲ್ಲಿ ಬಹುಕಾಲ ಪ್ರಜೆಗಳನ್ನು ಚನ್ನಾಗಿ 1 ಪಾಲಿಸಿದನು.

Rāma, the 2 son of Dasharatha and the husband of Sita, 3 eradicator of Vali in 4 Kishkindha for the sake of Sugreeva, 5 executioner of many rakshasas and the evil Rāvaṇa in Lankā 6 with ease, 1 ruled for a long time in his kingdom of Ayodhya.

दशरथ का 2 बेटा, सीता जी के पति, 4 किष्किन्धा मे सुग्रीव के लिए वाली को 3 मारने वला, लंका में राक्षसों को और दुष्ट रवण को 6 आसानी से 5 संहारने वाला, राम अयोध्या में बहुकाल तक प्रजाओं को अच्छी तरह से पाला.

अस्य चित्रं लिख्यते चेत् एवं भवति ।




एवं द्वित्रेषु वाक्येषु अभ्यासः करणीयः ।

## VIII प्रकृति - प्रत्यय

नामपदे क्रियापदे च प्रकृतिभागः (root), तथा प्रत्ययभागः इति भागद्वयं भवति । संस्कृते द्राविडभाषासु च प्रकृति-प्रत्यययोः मध्ये अन्तरं न भवति । हिन्द्यां आंग्लभाषायां च पृथक् लेखनं क्रियते । प्रकृति-प्रत्ययज्ञानेन एकविधानां शब्दानां सुलभतया अवगमः भवति । यथा चिन्मयशब्दः रामशब्दवत् इति ज्ञानम् ।

**कन्नडे**

| ಹುಡುಗನಿಂದ = | ಹುಡುಗ + ನಿಂದ, | ಮರದಲ್ಲಿ = | ಮರ + ದಲ್ಲಿ |
|---|---|---|---|
| ಓದುತ್ತಾನೆ = | ಓದು + ತ್ತಾನೆ | ಮಾಡಿದನು = | ಮಾಡು + ಇದನು |

+चिह्नस्य प्राक्तनभागः प्रकृतिः । उत्तरभागः प्रत्ययः ।

**आङ्ग्लभाषायां**, कानिचित् prepositions, सर्वाणि suffix तथा prefix संस्कृतव्याकरणदृष्ट्या प्रत्ययाः इति वक्तुं शक्यन्ते । अन्यः भागः प्रकृतिः –

| In a town | **In+a_town** | to town | **to+town** |
|---|---|---|---|
| For him | **for+him** | from the hut | **from+the_hut** |
| By weapons | **by+weapons** | to retain | **to+retain** |
| Beautiful | **beauti+ful** | fearless | **fear+less** |
| Politeness | **polite+ness** | national | **nation+al** |
| Unbeaten | **un+beaten** | anticlimax | **anti+climax** |

**हिन्दी**

| राम से | **राम+से** | देश के लिए | **देश+के_लिए** |
|---|---|---|---|
| बालक ने | **बालक+ने** | किया गया | **किया+गया** |

**IX अक्षर- प्रभेद- अन्त** इयं संस्कृत वर्णमाला -

(१) अ - आ इ - ई उ - ऊ ऋ - ॠ ऌ ए ऐ ओ औ अं - अः
(२) क ख ग घ ङ
च छ ज झ ञ
ट ठ ड ढ ण
त थ द ध न
प फ ब भ म
(३) य र ल व श ष स ह ळ
(१) स्वर (२) वर्गीयव्यंजन (३) अवर्गीयव्यंजन

स्वरेषु दीर्घस्य ऋकारस्य ऌकारस्य च, वर्गीयव्यंजनेषु झ-ङ-ढानां प्रयोगः अत्यल्पः । ळकारस्य प्रयोगः प्रसिद्धकोशानुसारं वेदेषु भवति ।

क् + अ = क.
ख् + अ = ख..........
क का कि की .....--> क्+अ, क्+आ, क्+इ........क्+अं, क्+अः

*एवं पदेष्वपि -*

| | | | | | | |
|---|---|---|---|---|---|---|
| राम -- | र्+ | आ+ | म्+ | अ | | |
| सीता -- | स्+ | ई+ | त्+ | अ | | |
| कमल-- | क्+ | अ+ | म्+ | अ+ | ल्+ | अ |

कदाचित् मध्ये स्वराक्षरं विना निरन्तरं व्यंजनानि भवन्ति –

| | | |
|---|---|---|
| संयुक्ताक्षर | *कृष्ण -- क्+ऋ+ष्+ण्+अ* | *स्वर्ग – स्+व्+अ+र्+ग्+अ* |

इमानि संयुक्ताक्षराणि इति कथ्यन्ते ।

संस्कृते एकस्मिन् शब्दे पंच संयुक्ताक्षराणि भवन्ति -

| | |
|---|---|
| कार्त्स्न्यम् - | र्+त्+स्+न्+य्+अ!!! |

इदानीमस्य विषयस्य अन्तिमः घट्टः । शब्देषु इकारान्तः, उकारान्तः तकातान्तः इत्यादिरूपेण व्यवहारः अस्ति । अस्य अर्थः – इकारः अन्ते भवति चेत् इकारान्तः । एवमन्यदपि ।

| | | | |
|---|---|---|---|
| राम -- | अकारांत | मति -- | इकारांत |
| गुरु -- | उकारान्त | गीता -- | आकारांत |
| गो -- | ओकारन्त | मातृ -- | ऋकारान्त |
| जगत् -- | तकारांत | तपस् -- | सकारान्त |

## X माहेश्वर सूत्र – प्रत्याहार

एवमेकम् ऐतिह्यं वर्तते । पाणिनिः इति महर्षिः आसीत् । तस्य सुलभव्याकारणं रचनीयमिति इच्छा आसीत् । सः महादेवं शिवमुद्दिश्य तपः अकरोत् । किंचित्कालानन्तरं महादेवः प्रकटीभूय स्वहस्तस्थितं ढक्कावाद्यं १४वारं नादितवान् । तत् पाणिनिमहर्षिणा एवं श्रुतम् –

| | | | |
|---|---|---|---|
| अइउण् | ऋऌक् | एओङ् | ऐऔच् |
| हयवरट् | लण् | | |
| ञमङणनम् | झभञ् | घढधष् | जबगडदश् |
| खफछठथचटतव् | कपय् | शषसर् | हल्. |

| सूत्र | अक्षर |
|---|---|
| अइउण् + ऋऌक् + एओङ् + ऐऔच् | स्वर |
| हयवरट् + लण् | अवर्गीय ५ वर्ण |
| ञमङणनम् | वर्गीय पञ्चम वर्ण |
| झभञ् + घढधष् | वर्गीय चतुर्थ वर्ण |
| जबगडदश् | वर्गीय तृतीय वर्ण |
| खफछठथचटतव् +.कपय् | वर्गीय प्रथम + द्वितीय वर्ण |
| शषसर् +.हल् | अवर्गीय ३+१ वर्ण |

इमानि संस्कृतव्याकरणस्य मूलसूत्राणि जातानि । महेश्वरात् आगतानि इति कारणतः एषां माहेश्वरसूत्राणि इति नाम अस्ति । यद्यपि एषामर्थः नास्ति; किन्तु महत् प्रयोजनमस्ति । तदित्थम् -

प्रत्येकसूत्रस्य अन्ते व्यंजनं वर्तते ण् क् च् . . . इत्यादि । तानि अन्त्यं कृत्वा पूर्वं यत्किंचित् अक्षरमुच्चारणीयम् । यथा –

| सूत्र | प्रत्याहार (abbreviation) |
|---|---|
| अ इ उ ण् | अण् , इण् |
| ज ब ग ड द श् | जश् |
| अ इ उ ण् ऋ ऌ क् ए ओ ङ् ऐऔच् | अच्, इच्, एङ्, ऐच् |

एतेषां प्रत्याहाराः इति नाम । आद्यन्ताक्षरैः आद्याक्षरं मध्यस्थिताक्षराणि च स्वीक्रियन्ते । यथा – अण् इत्यनेन अ इ उ इति अक्षराणि गृह्यन्ते । एवम्

| प्रत्याहार | अक्षर |
|---|---|
| अच् | सर्व स्वर |
| हल् | सर्व व्यंजन |
| जश् | वर्ग तृतीयाक्षर |

इदं तु अवधेयम् – द्वित्रसूत्राणां प्रत्याहारकरणे मध्यस्थसूत्राणाम् अन्तिमाक्षरं प्रत्याहारे नान्तर्भवति । यथा – शल् इत्यत्र रकारः नान्तर्भवति । केवलं श ष स ह ।

अग्रे सन्धिपाठे अस्माभिः एते प्रत्याहाराः उपयुज्यन्ते - अच्, हल्, इच्, जश्, अश्, हश्, खर् ।

## XI अन्तभेद्-रूपपरिवर्तन

[स.क.संस्कृतस्य अयमेकः मुख्यः घट्टः । विशेषतः दक्षिणभारतीयभाषाज्ञानिनाम् । सामान्यतः संस्कृताभ्यासकाले नामपद-क्रियापदेषु वैविध्यम् अवलोक्य' संस्कृते महान् क्लेशः अस्ति 'इति भावनां धारयन्ति । अतः पूर्णमनसा अध्ययने प्रवृत्तिः न सम्भवति । अयं भागः छात्राणां मानसिकसज्जतासम्पादनाय रचितः । अस्मदनुभवे, एकस्यां कक्ष्यायां पञ्चविंशतिजनेषु एकः द्वित्रदिनानन्तरं एतत्पाठार्थमागतवान् । अग्रे संस्कृतस्य नामपद-क्रियापदानां पाठकाले स एक एव 'कियत् मनसि स्थापनीयम्? बहु कष्टम्' इति पुनःपुनः वदन् आसीत् । अन्ये सर्वे अध्ययने व्यस्ताः आसन्!!!]

विभक्तयः सप्त एव । आङ्ग्लभाषायां हिन्दीभाषायां च एकस्य शब्दस्य तत्तद्विभक्तिरूपाणां परिचये सर्वेषां शब्दानां रूपाणि ऊहयितुं शक्यन्ते । परन्तु सर्वासु भाषासु एवं न शक्यते । उदा. आङ्ग्लभाषायां तृतीयाविभक्तौ by इति उपयुज्यते; एवं, हिन्द्यां 'से' उपयुज्यते इति ज्ञाने सर्वलिङ्गानां सर्ववचनेषु तृतीयाविभक्तिरूपस्य ज्ञानं शीघ्रं जायते । यथा –

| by Rāma | by Seeta | by an arrow | by trees. |
|---|---|---|---|
| राम से | सीता से | पेडों से | लडकों से |

यासु भाषासु प्रकृति-प्रत्यययोः सन्धिः भवति, यथा कन्नडे, तत्र एवंविधं सौलभ्यं नास्ति । कन्नडे राम, सीतॆ, कल्लु, पुस्तक, अदु इति शब्दानां तृतीयाविभक्तिरूपाणि पश्याम –

| **प्रथमा एकवचन** | **तृतीया एकवचन** | **प्रथमा बहुवचन** | **तृतीया बहुवचन** |
|---|---|---|---|
| राम/रामनु | रामनिंद | रामरु | रामरिंद |
| सीतॆ/सीतॆयु | सीतॆयिंद | सीतॆयरु | सीतॆयरिंद |
| कल्लु | कल्लिनिंद | कल्लुगळु | कल्लुगळिंद |
| पुस्तक/पुस्तकवु | पुस्तकदिंद | पुस्तकगळु | पुस्तकगळिंद |
| अदु | अदरिंद | अवुगळु | अवुगळिंद |

आङ्ग्ल-हिन्दीवत् अत्र शब्द+इंद इति नास्ति । क्वचित् निंद, क्वचित् यिंद, क्वचित् दिंद इत्यादि व्यत्यासः अस्ति । निंद् भवति चेत् पुंलिङ्गमिति वक्तुं शक्यते वा ? न । कल्लिनिंद इति नपुंसकेऽपि निंद् वर्तते ! रिंद इति बहुवचने एव इति वदामो वा ? अदरिंद इति एकवचनेऽप्यस्ति !

आङ्ग्ल-हिन्दीभाषयोः एवमेव by,for, to, in .... के लिए, को, में ..... इत्यादिविभक्तिज्ञानं सुलभम् । परन्तु दक्षिणभारतीयभाषासु इदं न सुलभम् ।

एतावतः कथनस्य अयं नाभिप्रायः यत् दक्षिणभारतीयभाषाः इतरभाषापेक्षया न्यूनाः इति । सर्वास्वपि भाषासु केचन सरला अंशाः केचन कठिनाश्च अंशाः भवन्ति । विभक्तिविषये हिन्दी-आङ्ग्लयोः सौलभ्यं वर्तते इत्येव प्रकृते ग्राह्यम् । आङ्ग्लभाषायामपि उच्चारणाननुगुणवर्ण(spelling)विषये, वचनभेदेन रूपभेदविषये, एवमन्यान्यविषयेषु काठिन्यं वर्तते एव । यथा –

| Cut - कट् | किन्तु | Put – पट् ✗ | पुट् ✓ |
|---|---|---|---|

एवं वचनविषये क्लेशः -

| book - books | |
|---|---|
| watch – watchs ✗ | watches ✓ |
| leaf - leafs ✗ | leaves ✓ |
| toy – toys ✓ | baby – babies ✓ |

एवं संस्कृतेऽपि प्रकृति-प्रत्यययोः सह लेखनेन विभक्तिषु बहु वैविध्यं भवति । तत् अग्रे पश्याम । एतावत्पर्यन्तं नामपदेषु दृष्टम् । इदानीं कन्नडभाषीयक्रियापदेषु वैविध्यं पश्याम –

| धातुः | वर्तमानकालः | भूतकालः | क्रियासाधितनामपदम् |
|---|---|---|---|
| हाकु | हाकुत्ताने | हाकिदनु | हाकिद्दु |
| हिडि | हिडियुत्ताने ✓<br>हिडित्ताने ✗ | हिडिदनु | हिडिदद्दु ✓<br>हिडिद्दु ✗ |
| कोडु | कोडुत्ताने | कोट्टनु | कोट्टद्दु ✓ कोडिदद्दु ✗ |
| कोळ्ळु | कोळ्ळुत्ताने | कोंडनु | कोंडद्दु |
| कदि | कदियुत्ताने | कद्दनु | कद्दद्दु |

# द्वितीयपाठः शब्दः – छात्रभागः

**अकारान्तः पुंलिङ्गः रामशब्दः**

| | | | |
|---|---|---|---|
| १ | रामः | रामौ | रामाः |
| | हे राम | हे रामौ | हे रामाः |
| २ | रामं | रामौ | रामान् |
| ३ | रामेण | रामाभ्यां | रामैः |
| ४ | रामाय | रामाभ्यां | रामेभ्यः |
| ५ | रामात् | रामाभ्यां | रामेभ्यः |
| ६ | रामस्य | रामयोः | रामाणाम् |
| ७ | रामे | रामयोः | रामेषु |

**अकारान्तःनपुंसकलिङ्गः जलशब्दः**

| | | |
|---|---|---|
| जलम् | जले | जलानि |
| हे जल | हे जले | हे जलानि |
| जलं | जले | जलानि |

अन्य सर्व अकारान्त रामशब्द सदृश

**तकारान्तः पुंलिङ्गः मरुत्-शब्दः**

| | | | |
|---|---|---|---|
| १ | मरुत् | मरुतौ | मरुतः |
| | हे मरुत् | हे मरुतौ | हे मरुतः |
| २ | मरुतम् | मरुतौ | मरुतः |
| ३ | मरुता | मरुद्भ्याम् | मरुद्भिः |
| ४ | मरुते | मरुद्भ्याम् | मरुद्भ्यः |
| ५ | मरुतः | मरुद्भ्याम् | मरुद्भ्यः |
| ६ | मरुतः | मरुतोः | मरुताम् |
| ७ | मरुति | मरुतोः | मरुत्सु |

**तकारान्तः नपुंसकलिङ्गः जगत्-शब्दः**

| | | |
|---|---|---|
| जगत् | जगती | जगन्ति |
| हे जगत् | हे जगती | हे जगन्ति |
| जगत् | जगती | जगन्ति |
| जगता | जगद्भ्याम् | जगद्भिः |
| जगते | जगद्भ्याम् | जगद्भ्यः |
| जगतः | जगद्भ्याम् | जगद्भ्यः |
| जगतः | जगतोः | जगताम् |
| जगति | जगतोः | जगत्सु |

**इकारान्तः पुंलिङ्गः हरिशब्दः**

| | | | |
|---|---|---|---|
| १ | हरिः | हरी | हरयः |
| | हे हरे | हे हरी | हे हरयः |
| २ | हरिम् | हरी | हरीन् |
| ३ | हरिणा | हरिभ्यां | हरिभिः |
| ४ | हरये | हरिभ्यां | हरिभ्यः |
| ५ | हरेः | हरिभ्यां | हरिभ्यः |
| ६ | हरेः | हर्योः | हरीणाम् |
| ७ | हरौ | हर्योः | हरिषु |

**उकारान्तःपुंलिङ्गः गुरुशब्दः**

| | | |
|---|---|---|
| गुरुः | गुरू | गुरवः |
| हे गुरो | हे गुरू | हे गुरवः |
| गुरुम् | गुरू | गुरून् |
| गुरुणा | गुरुभ्यां | गुरुभिः |
| गुरवे | गुरुभ्यां | गुरुभ्यः |
| गुरोः | गुरुभ्यां | गुरुभ्यः |
| गुरोः | गुर्वोः | गुरूणाम् |
| गुरौ | गुर्वोः | गुरुषु |

**आकारान्तः स्त्रीलिङ्गः रमाशब्दः**

| | | | |
|---|---|---|---|
| १ | रमा | रमे | रमाः |
| | हे रमे | हे रमे | हे रमाः |
| २ | रमाम् | रमे | रमाः |
| ३ | रमया | रमाभ्यां | रमाभिः |
| ४ | रमायै | रमाभ्यां | रमाभ्यः |
| ५ | रमायाः | रमाभ्यां | रमाभ्यः |
| ६ | रमायाः | रमयोः | रमाणाम् |
| ७ | रमायाम् | रमयोः | रमासु |

**इकारान्तः स्त्रीलिङ्गः मतिशब्दः**

| | | |
|---|---|---|
| मतिः | मती | मतयः |
| हे मते | हे मती | हे मतयः |
| मतिम् | मती | मतीः |
| मत्या | मतिभ्यां | मतिभिः |
| मत्यै-मतये | मतिभ्यां | मतिभ्यः |
| मत्याः-मतेः | मतिभ्यां | मतिभ्यः |
| मत्याः-मतेः | मत्योः | मतीनाम् |
| मत्यां-मतौ | मत्योः | मतिषु |

# अतिप्रमुखरूपाणि

**अकारान्तः पुंलिङ्गः रामशब्दः**

| | | | |
|---|---|---|---|
| १ | रामः ✓ | रामौ | रामाः |
| | हे राम | | |
| २ | रामं ✓ | | रामान् |
| ३ | रामेण, | | रामैः |
| ४ | रामाय | | |
| ५ | रामात् | | |
| ६ | रामस्य | रामयोः | रामाणाम् |
| ७ | रामे ✓ | | रामेषु |

**अकारान्तः नपुंसकलिङ्गः जलशब्दः**

| | |
|---|---|
| जलम् | जलानि |
| हे जल | |
| जलम् | जलानि |

अन्य सर्व
अकारान्त
रामशब्द
सदृश

**तकारान्तः पुंलिङ्गः मरुत्-शब्दः**

| | | |
|---|---|---|
| १ | मरुत् ✓ | मरुतः |
| २ | मरुतम् ✓ | |
| ३ | मरुता | मरुद्भिः |
| ४ | मरुते | |
| ५ | मरुतः | |
| ६ | मरुतः | मरुताम् |
| ७ | मरुति ✓ | |

**तकारान्तः नपुंसकलिङ्गः जगत्-शब्दः**

| | |
|---|---|
| जगत् | |
| जगत् | |
| जगता | जगद्भिः |

**सकारान्तः नपुंसकलिङ्गः मनस्-शब्दः**

| | | |
|---|---|---|
| १ मनः | मनसी | मनांसि |
| ३ मनसा | मनोभ्यां | मनोभिः |
| ४ मनसे | | |

| | इकारान्तपुंलिङ्गहरिशब्दस्य मुख्यरूपाणि | | उकारान्तपुंलिङ्गगुरुशब्दस्य मुख्यरूपाणि | |
|---|---|---|---|---|
| १ | हरिः | हरयः | गुरुः | गुरवः |
| २ | हरिम् | हरीन् | गुरुम् | गुरून् |
| ३ | हरिणा | हरिभिः | गुरुणा | गुरुभिः |
| ४ | हरये | | गुरवे | |
| ५ | हरेः | | गुरोः | |
| ६ | हरेः | हरीणाम् | गुरोः | गुरूणाम् |
| ७ | हरौ | हरिषु | गुरौ | गुरुषु |

| | आकारान्तः स्त्रीलिङ्गः रमाशब्दः | | इकारान्तः स्त्रीलिङ्गः मतिशब्दः | |
|---|---|---|---|---|
| १ | रमा | रमाः | मतिः | मतयः |
| २ | रमाम् | | मतिम् | |
| ३ | रमया | | मत्या | |
| ४ | रमायै | | मत्यै-मतये | |
| ५ | रमायाः | | मत्याः-मतेः | |
| ६ | रमायाः | रमाणाम् | मत्याः-मतेः | |
| ७ | रमायाम् | रमासु | मत्यां-मतौ | |

| | ईकारान्तस्त्रीलिङ्गस्य नदीशब्दस्यमुख्यरूपाणि | | ऋकारान्तःपुंलिङ्गः धातृशब्दः | |
|---|---|---|---|---|
| १ | नदी | नद्यः | धाता (हे धातः) | धातारः |
| २ | नदीम् | | धातारं | धातृन् |
| ३ | नद्या | | धात्रा | धातृभिः |
| ४ | नद्यै | | धात्रे | |
| ५ | नद्याः | | धातुः | |
| ६ | नद्याः | नदीनाम् | धातुः | धातृणाम् |
| ७ | नद्याम् | नदीषु | धातरि | धातृषु |

| अकारान्तसूत्रं | हलन्तसूत्रं | स्त्रीलिङ्ग-सूत्रम् | इकारान्तः | उकारान्तः | ऋकारान्तः |
|---|---|---|---|---|---|
| ३ एन | आ | या | हरिणा | गुरुणा | धात्रा |
| ४ आय | ए | यै | हरये | गुरवे | धात्रे |
| ५ आत् | अः | याः | हरेः | गुरोः | धातुः |
| ६ स्य | अः | याः | हरेः | गुरोः | धातुः |
| ७ ए | इ | याम् | हरौ | गुरौ | धातरि |

**अवधेयाः हलन्तशब्दाः**

| | | | | | |
|---|---|---|---|---|---|
| **तकारान्तः-** | **मरुत्-** | मरुत् | मरुतौ | मरुतः | |
| | **भगवत्-** | भगवान् | भगवन्तौ | भगवन्तः | |
| | | हे भगवन् | | | |
| | | भगवन्तं | भगवन्तौ | भगवतः | |

(इतः परं 'आ ए अः अः इ' योजनेन मरुत्-शब्दवत् । भगवता, भगवते .....)

| | | | | | |
|---|---|---|---|---|---|
| | **महत्-** | महान् | महान्तौ | महान्तः | |
| | **पचत्-** | पचन् | पचन्तौ | पचन्तः | |
| **नकारान्तः** | **करिन्-** | करी | करिणौ | करिणः | |
| | **आत्मन्-** | आत्मा | आत्मानौ | आत्मानः | आत्मना .... |
| | **राजन्-** | राजा | राजानौ | राजानः | राज्ञा .... |
| | **वृत्रहन्-** | वृत्रहा | वृत्रहणौ | वृत्रहणः | वृत्रघ्ना .... |
| | **नामन्(नपुं)-** | नाम | | नामानि | नाम्ना .... |
| **सकारान्तः** | **मनस्(नपु)** | मनः | मनसी | मनांसि | |
| | **वेधस्(पु)** | वेधाः | वेधसौ | वेधसः | |

**हलन्तशब्दानाम् अन्तनिर्धारणं कथम्? - द्विवचनादीनाम् अन्तिमहल्दर्शनेन**

उदा. → *सुहृत् सुहृदौ । *वणिक् वणिजौ । *उपानट् उपानहौ ।

**षष्ठीद्विवचने ओः इति अन्ते भवत्येव** → रामयोः । मरुतोः । हर्योः । गुर्वोः । मत्योः । नद्योः । रमयोः । राज्ञोः ।

तयोः । अपवादः उकारान्तशब्दे- गुरोः । गोशब्दे -गोः ।

**तृतीयाबहुवचने 'ऐः/भिः'** →अकारान्तशब्देषु ऐः भवति - रामैः, बालैः, देवैः. अस्य अपवादः 'रैः' - अयम्

ऐकारान्तः शब्दः, धनमित्यर्थः । अन्यशब्देषु 'भिः' - हरिभिः, गुरुभिः, मरुद्भिः, रमाभिः ।

**'ई' इति स्थलद्वये भवति** → करी (पु. करिन्-शब्दः) । नदी (स्त्री) ।

**तद्-एतद्-इदम्-यद्-किम् (पुंलिङ्गः)**

| **एकवचनं** | **द्विवचनं** | **बहुवचनम्** |
|---|---|---|
| सः-एषः-अयं-यः-कः | तौ | ते-एते-इमे-ये-के |
| तं-एतं-इमं-यं-कं | तौ | तान्-एतान्-इमान्-यान्-कान् |
| तेन-एतेन-अनेन-येन-केन | ताभ्यां | तैः-एतैः- यैः-कैः |
| तस्मै- अस्मै कस्मै | | तेभ्यः |
| तस्मात्- अस्मात्- कस्मात् | | तेभ्यः |
| तस्य-एतस्य-अस्य –कस्य | तयोः | तेषाम्-एतेषां-एषां- केषाम् |
| तस्मिन् | तयोः | तेषु |

**तद्-एतद्-इदम्-यद्-किम् (स्त्रीलिङ्गः)**

| **एकवचनं** | **बहुवचनम्** |
|---|---|
| सा-एषा-इयं-या-का | ताः- इमाः |
| तां-एनां | ताः |
| तया- अनया | ताभिः |
| तस्यै | ताभ्यः |
| तस्याः | ताभ्यः |

| तस्याः- अस्याः | तासाम्-आसाम् |
|---|---|
| तस्यां- अस्यां | तासु- आसु |

**दकारान्तः नपुंसकलिङ्गः तद्-शब्दः**

| **एकवचनं** | **द्विवचनं** | **बहुवचनम्** |
|---|---|---|
| तत् | ते | तानि |
| तत् | ते | तानि (अन्यत् पुंवत्) |

**दकारान्तौ त्रिषु लिङ्गेषु समानरूपौ अस्मद्-युष्मद्शब्दौ**

| **एकवचनं** | **बहुवचनम्** |
|---|---|
| १ *अहं।त्वं | वयं।यूयं |
| २ *मां-मा।त्वां | -नः*।युषान्-वः |
| ३ *मया।त्वया | अस्माभिः ।युष्माभिः |
| ४ मह्यं-*मे।तुभ्यं-*ते | अस्मभ्यं-नः।युष्मभ्यं-वः |
| ५ [मत्।त्वत्] | अस्मत्।युष्मत् |
| ६ *मम-*मे।तव*-ते | अस्माकं-*नः।युष्माकं-वः |
| ७ मयि।त्वयि | अस्मासु।युष्मासु |

**अभ्यासः -**

१. अधः सुभाषितसङ्ख्या तत्पुरतः लक्षणीयांशश्च दत्तः । तत्तेषु सुभाषितेषु तत्तान् अंशान् लक्षयत ।

11 – तृतीयाविभक्तिः

13 – स्त्रीलिङ्गशब्दाः

३५ – द्वितीयाविभक्तिः

19 – सप्तमी

23 – नकारान्तशब्दाः

18 – पञ्चमी विभक्तिः

# अध्यापकभागः

एतत्पाठस्य आरम्भात् प्राक् प्रथमपाठस्य **अध्यापकानां सामान्यसूचना** इति भागं पुनरेकवारमवलोकयन्तु ।

**सुबन्तपाठः**

अपेक्षितसमयः - १/१.३० घण्टा

फलम् - छात्राः संस्कृतस्य ९८% शब्दान् स्वयम् अवगच्छेयुः ।

वैशिष्ट्यम् - नव अजन्तानां, प्रायः समानरूपाणां दश हलन्तानां केषाञ्चित् सर्वनामशब्दानां च कतिपयरूपपरिचयेन संस्कृतस्य ९८% शब्दानां परिचयः जायते ।

अत्र पाठे विभागद्वयमस्ति ।

प्रथमे पारम्परिकशिक्षणे सुबन्तपाठः कथं भवतीति परिचयाय केषाञ्चित् शब्दानां प्रदर्शनं कृतम् । साम्प्रदायिकगुकुलपद्धतौ विद्यार्थिनः १७५तः अधिकानां शब्दानां सम्बोधनप्रथमासहितानां सप्तविभक्तीनां त्रिषु वचनेषु सर्वाणि रूपाणि कण्ठस्थीकुर्वन्ति । आदौ 'अकारान्तः पुंलिङ्गः रामशब्दः' इत्यादिरूपं तेषां परिचयमपि । तत्सर्वं तथैव आदौ प्रदर्शितम् ।

द्वितीयभागे सङ्गणकसाहाय्येन प्राप्तानां प्रचलिततमशब्दानां (High frequency words) उपयुक्ततमविभक्ति-वचन-रूपाणि (The most used case-number-forms)।

अस्मिन् पाठे चतुर्दश सोपानानि कल्पितानि । अयं तत्र सोपानक्रमः -

**प्रथमसोपानम्** - प्रथमतः केवलं '**अकारान्तः पुंलिङ्गः रामशब्दः, तकारान्तः पुंलिङ्गः मरुत्-शब्दः, इकारान्तः पुंलिङ्गः हरिशब्दः, उकारान्तः पुंलिङ्गः गुरुशब्दः, आकारान्तः स्त्रीलिङ्गः रमाशब्दः, इकारान्तः स्त्रीलिङ्गः मतिशब्दः, ईकारान्तः स्त्रीलिङ्गः नदीशब्दः, ऋकारान्तःपुंलिङ्गः धातृशब्दः, नकारान्तः पुंलिङ्गः आत्मन्-शब्दः, नकारान्तः पुंलिङ्गः राजन्-शब्दः**' इत्यादिशीर्षिकाः

पठित्वा वाचयित्वा च तदर्थः मनसि स्थापनीयः । देव-गिरि-बन्धु-पितृ-मातृ-मनस्-वणिज्-भगवत् इत्यादिशब्दान् उच्चार्य तेषामन्तः छात्रैः वाचनीयः ।

**द्वितीयसोपानम्**- तदनु (I)

| | | | |
|---|---|---|---|
| १ | रामः | रामौ | रामाः |
| | हे राम | हे रामौ | हे रामाः |
| २ | रामं | रामौ | रामान् |
| ३ | रामेण | रामाभ्याम् | रामैः |
| ४ | रामाय | रामाभ्याम् | रामेभ्यः |
| ५ | रामात् | रामाभ्याम् | रामेभ्यः |
| ६ | रामस्य | रामयोः | रामाणाम् |
| ७ | रामे | रामयोः | रामेषु |

(II)

| | | | |
|---|---|---|---|
| १ | रामः | रामौ | रामाः |
| २ | रामं | | रामान् |
| ३ | रामेण | | रामैः |
| ४ | रामाय | | |
| ५ | रामात् | | |
| ६ | रामस्य | रामयोः | रामाणाम् |
| ७ | रामे | | रामेषु |

(I) (II)अनयोः भेदं प्रदर्श्य द्वितीयपट्टिकाप्रदर्शितरूपाणां परिचयः अस्माकं लक्ष्यः इति उद्देश्यं स्पष्टनीयम् ।

**तृतीयसोपानम्-**

१ रामः

२ रामं

३ रामेण

४ रामाय

५ रामात्

६ रामस्य

७ रामे

एवम् अकारान्तशब्दस्य केवलं एकवचनरूपपरिचयः करणीयः । तदनु हलन्तशब्दस्य एकवचनरूपाणां परिचयसमयः -

१ मरुत्

२ मरुतम्

३ मरुता

४ मरुते

५ मरुतः

६ मरुतः

७ मरुति

संस्कृते अकारान्तशब्दानन्तरं हलन्तशब्दानां प्रयोगः अधिकः । हलन्तेषु पुंलिङ्गस्त्रीलिङ्गयोः रूपभेदः नास्ति !! तृतीयाविभक्त्यनन्तरं त्रिष्वपि लिङ्गेषु रूपाणि समानानि ! अकारान्त-हलन्तयोः मेलने संस्कृते उपयुज्यमानशब्दानां ६०% परिचयः जायते !! अतः अध्यापकैः हलन्तपरिचायने अधिकमवधानं देयम् ।

द्वयोः परिचयानन्तरं केवलमेकवचनरूपाणि दृष्ट्वा कस्य कस्य रूपस्य विभक्तिः विना सन्देहं वक्तुं शक्यते ? इति प्रश्नस्य उत्तरं प्राप्तव्यम् । यथा - रामः इत्यत्र अन्ते 'अः' इत्यस्ति । हलन्तस्य

पञ्चमी-षष्ठीविभक्तिरूपयोः 'मरुतः-मरुतः' इत्यत्रापि 'अः' इत्यस्ति । अतः 'अः' इति दर्शने न निर्धारः ।

रामं - मरुतं → 'अं' प्राप्तौ द्वितीयायाः निर्धारः कर्तुं शक्यः । यत्र निर्धारः कर्तुं शक्यः तत्र छात्रैः */✓ इति चिह्नं स्थापनीयम् । अन्ते एवं भवति -

| | | |
|---|---|---|
| १ | रामः | मरुत्✓ |
| २ | रामं✓ | मरुतं✓ |
| ३ | रामेण✓ | मरुता✓ |
| ४ | रामाय✓ | मरुते (अकारान्तसप्तम्यामपि 'ए' अस्ति । अतः न निर्धारः ।) |
| ५ | रामात्✓ | मरुतः |
| ६ | रामस्य✓ | मरुतः |
| ७ | रामे(हलन्तचतुर्थ्यामप्यस्ति 'ए') | मरुति✓ |

'ए' भवति चेत् अकारान्तस्य सप्तमी वा हलन्तस्य चतुर्थी वा भवति ।

-आ, -ए, -अः, `-अः, -इ → इति इदं हलन्तसूत्रम् । अर्थात् यस्य कस्यापि हलन्तप्रातिपदिकस्य एतदक्षराणां योजने तृतीयादिसप्तम्यन्तानामेकवचनरूपाणि सिद्ध्यन्ति ! उ.दा. भगवत् → भगवता, भगवते, भगवतः, भगवतः, भगवति ! एवमेव आत्मन्, करिन्, वणिज्-प्रभृतिशब्दरूपाणि छात्रैः वाचनीयानि । इदं सूत्रं कण्ठस्थीकारणीयम् । अन्ते अवधातव्यानां हलन्तशब्दानां पट्टिका दत्ता । एकवारं सा अत्र दृश्यताम् ।

**चतुर्थसोपानं** - इदानीं इकारान्तस्य उकारान्तस्य च एकवचनरूपाणि एकदा द्रष्टव्यानि । तत्रापि -आ, -ए इति सूत्रभागः अन्वेति ! सप्तम्यां औ इति उभयोः समानम् । केवलमत्रैव सप्तम्याम् औ भवति इत्यपि दर्शनीयम् । एतेषां प्रयोगः अकारान्त-हलन्तवत् न अधिकः । अतः केवलमेकवारं दर्शनं कार्यताम् । पुनः पुनः आवृत्तिः अवधानं वा मास्तु ।

*इदानीं पुस्तकस्य अन्ते दत्तानां सुभाषितानां पठनं भवतु । तत्र विद्यमानानामेकवचनरूपाणां परिचयः छात्रैः यथा स्वयं क्रियेत तथा साहाय्यमध्यापकैः विधेयम् । अयं क्रमः यदा कदाऽपि मध्ये*

*मध्ये अनुसरणीयः । यदा छात्राः स्वयं शब्दानां विभक्त्यादि लक्षयन्ति तदा तेषामात्मविश्वासोऽपि वर्धते, पाठे रुचिरपि अभिवर्धते ।*

**पञ्चमसोपानं** - राम-रामं, मरुत्-मरुतं, हरि-हरिं, गुरु-गुरुं, रमा-रमां, मति-मतिं, नदी-नदीं इति स्वयं कथनपूर्वकं छात्रैः वाचयित्वा द्वितीयायाः एकवचनं सुलभतया ज्ञातुं शक्यते इति विश्वासः उत्पाद्यः ।

**षष्ठसोपानं** - राम-रामाणां, हरि-हरीणां, गुरु-गुरूणां, रमा-रमाणां, मति-मतीनां, नदी-नदीनां इति स्वयं कथनपूर्वकं छात्रैः वाचयित्वा अजन्तानां षष्ठीबहुवचनस्य परिचयः कार्यः । मरुत्-मरुताम् इति हलन्ते केवलं 'आं' इति योज्यते अन्यत्र नियमेन 'नां' भवति इति व्यत्यासः ज्ञापनीयः । तदनु, देव-देवानां, गिरि-गिरीणां, बन्धु-बन्धूनां, नाडी-नाडीनां, बुद्धि-बुद्धीनाम् इति अजन्तानां, तथा, भगवत्-भगवतां, आत्मन्-आत्मनां, पचत्-पचतां, वणिज्-वणिजाम् इति हलन्तानां च षष्ठीबहुवचनरूपाणां सुलभतया परिचयः कार्यः ।

**सप्तमसोपानं** - राम-रामेषु, हरि-हरिषु, गुरु-गुरुषु, रमा-रमासु, मति-मतिषु, नदी-नदीषु, धातृ-धातृषु, मरुत्-मरुत्सु इति प्रातिपदिकस्य सु/षु योजने सप्तमीबहुवचनरूपस्य परिचयः साधितः भवति !

एवमेव राम-रामैः इति तृतीयाबहुवचने 'ऐः' अस्ति । अन्यत्र सर्वत्र भिः अस्ति इति दर्शयित्वा तृतीयाबहुवचनपरिचयः साधनीयः ।

**अष्टमसोपानं** - राम-रामान्, हरि-हरीन्, गुरु-गुरून् इति अजन्तपुंलिङ्गद्वितीयाबहुवचनरूपपरिचयः वचनवाचनक्रमेण कार्यः । स्त्रीलिङ्गादीनां द्वितीयाबहुवचनरूपाणां प्रयोगः विरलः । अतः तत्परिचयः इदानीं मास्तु ।

**नवमसोपानं** - स्त्रीलिङ्गशब्दपरिचयः । स्त्रीलिङ्गशब्दसूत्रम् ।

| | | | | |
|---|---|---|---|---|
| १ | रमा | मतिः | नदी | |
| २ | रमाम् | मतिं | नदीं | |
| ३ | रमया | मत्या | नद्या | -या |
| ४ | रमायै | मत्यै-मतये | नद्यै | -यै |

| | | | | |
|---|---|---|---|---|
| ५ | रमायाः | मत्याः-मतेः | नद्याः | -याः |
| ६ | रमायाः | मत्याः-मतेः | नद्याः | -याः |
| ७ | रमायाम् | मत्यां-मतौ | नद्यां | -याम् |

स्त्रीलिङ्गे अन्तः कोऽपि भवतु तृतीयातः सप्तमीपर्यन्तं एकवचने -या, -यै, -याः, -याः, -याम् इति भवति ! इदं सूत्ररूपेण कण्ठस्थीकारणीयम् । इदानीं स्त्रीलिङ्गैकवचनरूपपरिचयः साधितः !! (मतिशब्दे रूपद्वयं वर्तते । एकं हरिवत् । अपरं या-यै इत्याद्यन्तम् ।)

**दशमसोपानम्** - साम्प्रदायिकशब्दरूपावलिम् उद्घाट्य सर्वेषां षष्ठीद्विवचनरूपाणि पश्याम । राम-रामयोः, मरुत्-मरुतोः, हरि-हर्योः, गुरु-गुर्वोः, रमा-रमयोः, मति-मत्योः, नदी-नद्योः, धातृ-धात्रोः । 'ओः' भवति चेत् षष्ठीद्विवचनम् ! 'गुरोः' (उकारान्तस्य पञ्चमी-षष्ठ्योः एकवचनम्) 'गोः' (गोशब्दस्य पञ्चमी-षष्ठ्योः एकवचनम्) - इति अपवादौ ।

*एतावत्पर्यन्तं सर्वनामशब्दान् विहाय अन्येषां प्रयुक्ततमशब्दानां परिचयः जातः । सुभाषितानि उद्घाटयत । छात्राणां साहाय्यं कुरुत ।*

तत्र अयं क्रमः - यदा एकः शब्दः स्वीक्रियते तदा अकारान्तैकवचनं वा इति द्रष्टव्यम् । एन, आय, आत्, स्य, ए इति सूत्रं चालनीयम् । यदि नान्वेति तदा आ, ए, अः, अः, इ इति सूत्रं चालनीयम् । आवश्यकं चेत् या, यै, याः, याः, याम् इति सूत्रं चालनीयम् । यदि एतावताऽपि न ज्ञायते तदा रूपानुसारेण पूर्वोक्तानि लक्षणानि प्रदर्श्य यथा छात्राः स्वयं विभक्तिवचनानि वदेयुः तथा साहाय्यं करणीयम् ।

**एकादशसोपानम्** - इदानीं सर्वनामशब्दपरिचयः । युगपत् **तद्-एतद्-इदम्-यद्-किम्-सर्व** एतेषां पुंलिङ्गरूपाणां परिचयः प्रदर्शितरीत्या क्रियताम् । प्रथमा-षष्ठीबहुवचनयोः तथा चतुर्थी-पञ्चमी-सप्तमीनामेकवचनेषु विशिष्टरूपसद्भावात् पूर्ववत् छात्रैः ✓ चिह्नं स्थाप्यताम् ।

**द्वादशसोपानम्** - **अवधेयाः हलन्तशब्दाः** इति शीर्षिकायाः अधस्तात् दत्तान् शब्दान् परिशील्य पाठयन्तु । आहत्य एकादशशब्दाः सन्ति । तकारान्तस्य चत्वारः, नकारान्तस्य पञ्च, सकारान्तस्य द्वौ । एतैः सह अयमपि प्रभेदः अस्ति

| | | | | |
|---|---|---|---|---|
| च-जकारान्तौ | वाच्- | वाक् | वाचौ | वाचः |

वणिज्- वणिक् वणिजौ वणिजः

द्वितीयस्तरे अनयोः परिचयः भवतु ।

**त्रयोदशसोपानम्- रूपनिश्चये केचन सरलाः उपायाः-**

संस्कृते एकवचने 'ई' इति स्थलद्वये भवति ।

१. नदी (स्त्री.)

२. करी (पु.) अस्य प्रयोगः अधिकतया अस्ति ।

पुंलिङ्गे एकवचने 'आः' भवति चेत् सकारान्तः । उ.दा. वेधाः ।

नपुंसके एकवचने 'अः' भवति चेत् सकारान्तः । उ.दा. मनः, वचः, नमः । अस्य प्रयोगः अधिकतया अस्ति ।

एकवचने अनुस्वार-विसर्गरहिततया 'अ' इत्यस्ति चेत् नपुंसक-नकारान्तः । उ.दा. नाम, धाम ।

*इदानीं पुनः सुभाषितानि उद्घाटयत । छात्राः ९८%+ शब्दान् स्वयम् अवगच्छेयुः । अस्य अयं नार्थः यत् सर्वे छात्राः बहुसुलभतया सर्वाणि रूपाणि लक्षयन्ति इति । किन्तु तावतां शब्दानाम् अवगमनाय अपेक्षितं ज्ञानं तैः एतावत्पर्यन्तं प्राप्तम् । अध्यापकानां साहाय्येन पौनःपुन्येन अभ्यासेन च लक्षणे वेगः जायते ।*

**चतुर्दशसोपानम्** - एतदनन्तरं यथा यथा आवश्यकता उद्भवति तथा तथा ऋकारान्तस्य इतरविभक्तीनां च परिचयः कार्यः ।

# तृतीयपाठः अव्ययः - छात्रभागः

**प्रकार/रीतिवाचकानि** - यथा-तथा सर्वथा अन्यथा । उ.दा.तथा = तया रीत्या । ಹೇಗೊ-ಹಾಗೆ, जैसे-वैसे (हि), as-so.

**कालवाचकानि** - तदा यदा सदा सर्वदा कदा । उ.दा. यदा तदा = यस्मिन् काले तस्मिन् काले । ಯಾವಾಗ-ಆವಾಗ, तब जब (हि), then, when.

**प्रयोजनवाचकानि** - परार्थं देशार्थं कुटुम्बार्थम् । देशार्थं = ದೇಶಕ್ಕಾಗಿ, देश के लिये (हि), for nation

**देशवाचकानि** - तत्र यत्र अन्यत्र अत्र उत्तरत्र तत्र इत्यत्र सर्वत्र उभयत्र कुत्रापि । तत्र =ಅಲ್ಲಿ, वहां (हि), there.

**विभागवाचकानि** - दशधा अष्टधा शतधा चतुर्धा त्रिधा पञ्चधा बहुधा । दशधा= ಹತ್ತು ಭಾಗ, दस भाग (हि), ten parts.

**पञ्चम्यर्थ-क्वचित्-सप्तम्यर्थवाचकानि** - अतः ततः यतः कुतः इतः परतः स्वतः शेषतः विशेषतः । ततः =ಅಲ್ಲಿಂದ, वहां से (हि), from there

**तुमुन्प्रत्ययान्तानि उद्देश्यक्रियावाचकानि** - वेदितुम् ज्ञातुम् प्रतिपादयितुम् निराकर्तुम् दर्शयितुम् । वेदितुम् = ತಿಳಿಯಲು, जानने के लिए (हि), to know.

**ल्यप्-प्रत्ययान्तानि पूर्वक्रियावाचकानि** - प्रणम्य प्रविश्य निर्दिश्य आश्रित्य आविश्य आरभ्य सङ्गृह्य । प्रणम्य =ನಮಸ್ಕರಿಸಿ, प्रणाम कर के (हि), after bowing.

**क्त्वाप्रत्ययान्तानि पूर्वक्रियावाचकानि** - नत्वा स्मृत्वा ज्ञात्वा गत्वा कृत्वा स्थित्वा मत्वा पठित्वा दत्वा । नत्वा =ನಮಸ್ಕರಿಸಿ, प्रणाम कर के (हि), after bowing.

**अनिर्दिष्टविशेषवाचकानि-** कश्चित् क्वचित् केचित् किञ्चित् कदाचित् केषाञ्चित् कथञ्चित् कानिचित् ।

कश्चित् = ಯಾರೊ ಒಬ್ಬ, कोई (हि), some one.

**विभक्तिप्रतिरूपकानि** -नाना अन्तरेण मिथ्या नाम समम् ओम् अवश्यम् चिरम् सत्यम् यत् अनन्तरम् परम्

**गणसूचकानि** – गणशः, शतशः, क्रमशः

## कानिचित् प्रसिद्धानि अव्ययानि

इति - ಅಂತ, ऐसा, thus. मारीचः हा! राम! इति अवदत्

एव - ಏ, ही, only/alone. कृष्णः भगवान् एव

च - ಮತ್ತು, और, and. रामः च सीता अरण्ये अस्ति (रामः सीता च)

अपि - ಊ, भी, also. रामः वनं गच्छति । सीता अपि गच्छति ।

न - ಅಲ್ಲ, नही, not. रावणः धार्मिकः न

न+तिङन्तं - ಇಲ್ಲ, नहीं है, no/not. घटे जलं नास्ति

किन्तु - ಆದರೆ, किन्तु, but. राजा साधुः । किन्तु, न दक्षः ।

एवम् - ಹೀಗೆ, ऐसा, thus. कलियुगे एवं भवति ।

यथा-तथा - ಹೇಗೋ-ಹಾಗೆ, जैसा-वैसा, as-so. यथा राजा तथा प्रजाः

अतः - ಆದ್ದರಿಂದ, इस कारण से, for this reason. पर्वते धूमः अस्ति । अतः वह्निः अस्ति ।

वा - ಅಥವಾ, अथवा, or. लोके शौर्यं वा पाण्डित्यं वा भवेत् ।

# अव्ययपाठः - अध्यापकसूचनाः

समयः – २०-३० निमेषाः

फलम् – केवलं परिचयः, न तु कण्ठस्थीकरणम् ।

पाठक्रमः – यावन्ति अव्ययानि अर्थसहिततया दत्तानि तेषां सामान्यतः परिचयः क्रियताम् । अथवा, किन्तु इत्यादीनि कानिचित् अव्ययानि इतरभारतीयभाषास्वपि भवन्ति । तथात्वे तत्तद्भाषाणामुदाहरणान्यपि दर्शनीयानि । तेन छात्राणां सारल्यभावना भवति ।

समानाकाराणामव्ययानां परिचयेन सुलभतया बहूनां परिचयः भवति ।

अत्र पाठे केवलं 'एवमेवं पदानि तेषामर्थाश्च' इति परिचय एव करणीयः। यदा सुभाषितादिकं किञ्चित् पठ्यते तदा अव्ययानां प्रसङ्गे अयं भागः अवलोकनीयः इति सूचना छात्रेभ्यः दीयताम् ।

---

**अभ्यासः -**

सुभाषितेषु 6, 7, 9, 17, 20, 26, 25तमसुभाषितेषु विद्यमानानि अव्ययानि लक्षयत ।

---

# चतुर्थपाठः सन्धिः - छात्रभागः

## संस्कृते अधिकमुपयुज्यमानाः एकादश सन्धयः

### I दशनियमेषु विसर्गसन्धिः

(पूर्वं इच्, खर्, अश् तथा हश् हल् प्रत्याहाराः स्मारणीयाः । तदुपयोगिवर्णमाला अन्ते प्रदर्शिता ।)

**सामान्यनियमाः** (विसर्गात् प्राग्विद्यमानवर्णस्य अवलोकनापेक्षा नास्ति)

: + खर्-वर्णः भवति चेत् -

1) :+ क/ख/प/फ/श/ष/स = : क/ख/प/फ/श/ष/स

रामः+ कृष्णः = रामः कृष्णः, देवः + पालकः = देवः पालकः

1.1) :+ श/ष/स = : श/ष/स **अथवा** श्श/ष्ष/स्स

देवः + शरणं = देवः शरणम् **अथवा** देवश्शरणम्

सज्जनाः सन्ति = सज्जनाः सन्ति **अथवा** सज्जनास्सन्ति

2) : + च/छ = श्च/श्छ

बालः+ चलति = बालश्चलति, प्रातः+ छाया = प्रातश्छाया

3) : + त/थ = स्त/स्थ

वृक्षः+ तत्र = वृक्षस्तत्र

[[4) :+ ट/ठ = ष्ट/ष्ठ

गुरुः+ टीकते = गुरुष्टीकते ]]

**विशेषनियमाः** (विसर्गात् प्राग्विद्यमानवर्णस्य अवलोकनापेक्षा अस्ति)

5) इच् :+ अश् = इच्-र्-अश् (रेफादेशसन्धिः)

गिरिः+ अत्र = गिरिरत्र, गौः+ याति = गौर्याति

[6) आः+ अश् = आ(लोपः) अश् (आकारोत्तरविसर्गलोपः)

बालाः+ अत्र = बाला अत्र, बालाः+ यान्ति= बाला यान्ति]

7.1) अः+अ = ओऽ (अमध्यविसर्गसन्धिः)

रामः+अस्ति = रामोऽस्ति

7.2) अः+ हश् = ओ हश् (ओकारादेशसन्धिः)

बालः+ हसति = बालो हसति

[7.3) अः+ आ....औ = अ(लोपः) आ....औ (अकारोत्तरविसर्गलोपः)

बालः+ आयाति = बाल आयाति]

**अपवादनियमः**

सः/एषः + हल् = स/एष (लोपः)

सः + बालः = स बालः । एषः + बालः = एष बालः ।

**II जश्त्वसन्धिः**

विवरणम् - वर्गप्रथमाक्षरस्य तृतीयाक्षरं (जश्) भवति ।

उदा. - वाक्+ईशः = वागीशः, जगत्+अत्र = जगदत्र

**III सवर्णदीर्घसन्धिः**

अ/आ+अ/आ = आ

इ/ई+इ/ई = ई

उदा. - देव+आलयः = देवालयः, इति+इह = इतीह

**IV यण्-सन्धिः**

इ+अच् = य्-अच्

उदा. - इति+अत्र = इत्यत्र, भवति+अतः = भवत्यतः

[उ+अच् = व्-अच् उदा. - मधु+अस्ति = मध्वस्ति ]

## V गुणसन्धिः

अ/आ+इ/ई = ए

अ/आ+उ/ऊ = ओ

उदा. - रमा+ईशः = रमेशः, देव+इन्द्रः = देवेन्द्रः, सूर्य+उदयः = सूर्योदयः

## VI अनुनासिकसन्धिः

विवरणम् - वर्गप्रथमाक्षरस्य पञ्चमाक्षरे परे पञ्चमाक्षरं भवति ।

उदा. - चेत्+न = चेन्न, तस्मात्+न = तस्मान्न

## VII अनुस्वारसन्धिः

न्+त = ंस्त

उदा. - गुणवान्+तत्र = गुणवांस्तत्र, भगवान्+तनोति = भगवांस्तनोति

## VIII वृद्धिसन्धिः

अ/आ+ए/ऐ = ऐ

(अ/आ+ ओ/औ = औ)

उदा. - एक+एकम् = एकैकम्

## IX छत्वसन्धिः

त्+श् = च्छ्

उदा. - तत्+श्रुत्वा = तच्छ्रुत्वा, तत्+शमः = तच्छमः

## X ए-औसन्धिः

ए + अ = एऽ - वने + अत्र = वनेऽत्र (पूर्वरूपसन्धिः)

ए + आ.....औ = अ आ....औ - वने + इह = वन इह

[औ + अच् = आव् अच् - बालौ + अत्र = बालावत्र]

## XI चसन्धिः

त्+च = च्च (व्याकरणे अस्य श्चुत्वसन्धिः इति नाम)

उदा. तत्+चर्चा = तच्चर्चा

## सन्धिपाठाय आवश्यकानां प्रत्याहाराणां परिचयः

अ आ इ ई उ ऊ ऋ ॠ ए ऐ ओ औ → अच्

इ ई उ ऊ ऋ ॠ ए ऐ ओ औ → इच्

| खर्/कर्कश वर्णाः → | | |
|---|---|---|
| क ख | ग घ ङ | |
| च छ | ज झ ञ | अश् = अच् + हश् |
| ~~ज झ~~ ट ठ | ड ढ ण | → हश् |
| त थ | द ध न | |
| प फ | ब भ म | |
| श ष स | य र ल व - ह | |

**अभ्यासः -**

१. अधः सुभाषितसङ्ख्या तत्पुरतः सन्धिनाम च दत्ते । तत्तेषु सुभाषितेषु तत्तान् सन्धीन् लक्षयत ।

32, 36, 38, 55, 59 – विसर्गसन्धिः

29 – यण्

33, 42 – गुणः

28, 29 – जश्

19, 20, 45 – सवर्णदीर्घः

46, 56 – वृद्धिः

33 - औसन्धिः

# अध्यापकसूचनाः

समयः – एकघण्टा

फलम् – सन्धिविषये आत्मविश्वासः ।

वैशिष्ट्यम्- केवलमेकादशानां सन्धीनां सम्यक् ज्ञाने संस्कृतस्य ९८%स्थले सन्धिक्लेशः न भवति!

हिंदी-English-प्रभृतिभाषासु सन्धिः अत्यन्तविरलः । सूर्योदय इत्यादिषु साक्षात् संस्कृतात् स्वीकृतेषु शब्देष्वेव दृश्यते । दक्षिणभारतीयभाषासु, उदाहरणाय कन्नडे, ८%-९% शब्देषु सन्धिः भवति ! संस्कृते कदाचित् ६०% सन्धयः भवन्ति !! ग्रन्थस्थसंस्कृताध्येतॄणां मनसि सन्धिविषये भयमविश्वासश्च भवति । अयं पाठः तौ दूरीकरोति ।

पाठक्रमः – सन्धिः नाम द्वयोः अक्षरयोः योजने सम्पद्यमानः वर्णविकारः । सन्धिस्थले अर्थव्यत्यासः न भवति ।

कदाचित् केचित् छात्राः वर्णानां क्रमं, यथा ग्रन्थः इत्यत्र ग्+र्+अ+न्+थ्+अ+: इति वर्णानाम् आनुपूर्वीं, सम्यक् लक्षयितुं न पारयन्ति । अतः सङ्क्षेपेण पुनः एकवारं आद्यपाठस्य नवमबिन्दुं पाठयन्तु । विशेषतः यण्सन्धिपाठे अनेन सरलता भवति । एतद्भागस्य अन्ते सचित्रं दत्तान् प्रत्याहारानपि पुनः स्मारयित्वा पाठः आरभ्यताम् ।

तदनु क्रमशः पाठे सूचितरीत्या सन्धीन् परिचाययन्तु । [ ] चिह्नयोः निर्दिष्टाः विरलाः [[ ]] इति चिह्नस्थस्तु अत्यन्तं विरलः । अतः तदतिरिक्तसन्धिष्वेव अवधानं देयम् ।

विसर्गानां मध्ये ४५%तः अधिकं विसर्गसन्धिः भवति ! अतः तत्पाठसमनन्तरं सुभाषितेषु (२६, २८, ४७तमादिषु) तेषां परिचयः करणीयः । अन्यपाठेष्विव अध्यापकाः अस्मिन् कार्ये केवलं सहायकाः ! सर्वमुत्तरं छात्रैः वाचनीयम् ।

विसर्गसन्धौ अयं विषयः प्रथमतः स्पष्टीकरणीयः – विसर्गात् प्राक् नियमेन स्वराः भवन्ति । बालः, गिरिः, धनैः, गौः – इत्यादिपदानि दीर्घम् उच्चार्य अयमंशः मनसि करणीयः ।

---

# पञ्चमपाठः समासः - छात्रभागः

## संस्कृते उपयुज्यमानानाम् अतिप्रमुखसमासानां परिचयः

नामपदं + नामपदं = समासः । उदा. – सूर्यस्य उदयः = सूर्योदयः ।

सूर्यस्य उदयः → विग्रहवाक्यं

सूर्योदयः → समासः

**मुख्यसूचना** – समासे पूर्वपदस्य विभक्तेः लोपः भवति । यथा सूर्यस्य इत्यत्र स्य इति लुप्तं भवति ।

प्रातिपदिकम् उर्वरितं भवति, सूर्य इति भागः एव अवशिष्यते । आवश्यकं चेत् सन्धिः भवति । सूर्योदयः इत्यत्र गुणसन्धिः भवति । सूर्यस्य दर्शनं = सूर्यदर्शनम् इत्यत्र सन्धेरावश्यकता नास्ति ।

| | अ | त. | द्व. | ब. |
|---|---|---|---|---|
| | [अव्ययीभावः] | तत्पुरुषः | द्वन्द्वः | बहुव्रीहिः |
| उदा.१ | यथाशक्ति | सूर्योदयः | रामलक्ष्मणौ | पीताम्बरः |
| उदा.२ | निर्विघ्नं | विद्याधनं | पातालभूमिगगनानि | हतरावणः |

| **तत्पुरुषप्रभेदाः** | **सूचकानि** |
|---|---|
| प्रथमातत्पुरुषः (कर्मधारयः) | प्रथमान्तपदं + नामपदम् |
| द्वितीयातत्पुरुषः | द्वितीयान्तपदं + नामपदम् |
| तृतीया-चतुर्थी-पञ्चमीतत्पुरुषाः | तृतीया-चतुर्थी-पञ्चम्यन्तपदं + नामपदम् |
| षष्ठीतत्पुरुषः | षष्ठ्यन्तपदं + नामपदम् |
| सप्तमीतत्पुरुषः | सप्तम्यन्तपदं + नामपदम् |

**अव्ययीभावः** – पूर्वपदार्थप्रधानः (विरलः)

**तत्पुरुषः** – उत्तरपदार्थप्रधानः (कर्मधारयस्य षष्ठीतत्पुषस्य च प्रयोगः अधिकः)

**द्वन्द्वः** - उभयपदार्थप्रधानः (सरलः) (पदद्वयनियमः नास्ति)

**बहुव्रीहिः** – अन्यपदार्थप्रधानः = समासघटकपदभिन्नपदस्य अर्थः प्रधानः ।

बहुव्रीहौ विग्रहः – १. पीतम् अम्बरं यस्य सः = पीताम्बरः । अस्य पठनक्रमः – यस्य अम्बरं पीतं सः = पीताम्बरः ।

२.हतः रावणः येन सः = हतरावणः । अस्य पठनक्रमः – येन रावणः हतः सः = हतरावणः ।

**कर्मधारयसूचकम्**- प्रथमा + (इव/इति/एव) प्रथमा

**कर्मधारयप्रभेदाः**

कृष्णः सर्पः = कृष्णसर्पः (कृष्णश्चासौ सर्पश्च = कृष्णसर्पः)

मेघ इव श्यामः = मेघश्यामः

राम इति नाम = रामनाम

विद्या एव धनं = विद्याधनम्

## अवधेयसमासाः

१ .**मध्यमपदलोपी समासः** (प्रायः कर्मधारयः)

नामपदं १+ नामपदं २+नामपदं ३ = नामपद१नामपद३

श्री+युक्तः +रामचन्द्रः = श्रीरामचन्द्रः (कर्मधारयः)

**२ .उपपदसमासः** (नित्यसमासः)

नामपदं+धातुजन्यं नामपदं = उपपदसमासः । समासाघटकपदेन विग्रहः ।

उदा. – जले **जायते इति** = जलजम् । न तु जले जं = जलजम् ।

सर्वं **जानातीति** = सर्वज्ञः । न तु सर्वं ज्ञः = सर्वज्ञः ।

**३ .नञ्समासः – नञ्तत्पुरुषः तथा नञ्बहुव्रीहिः**

न इति निषेधार्थकमव्ययम् । तस्य मूलरूपं नञ् इति । ञकारः प्रयोगे न भवति । समासे अयं शब्दः अ – अन् इति रूपेण अवशिष्यते ।

न विद्या – अविद्या न ज्ञानम् – अज्ञानम्

न अश्वः – अनश्वः न विद्यते अङ्गं यस्य सः – अनङ्गः

**४. प्रादिसमासः**

प्र इत्यादयः एकां क्रियां सूचयन्ति । यथा – निर् = निर्गतं, प्र = प्रकृष्टम् ।

निर्गतः दोषात् = निर्दोषः । प्रकृष्टं वचनं = प्रवचनम् ।

**अभ्यासः –** H.W 29/8/15

**सूचितश्लोकेषु तत्तत्समासान् लक्षयत –**

षष्ठीतत्पुरुषः - 26, 28, 61, 62

सप्तमीतत्पुरुषः - 22, 36

बहुव्रीहिः - 32, 33, 47, 60

नञ्समासः - 40, 48

सङ्कीर्णम् - 19, 34, 42, 44, 46, 50, 57, 75

तृतीयातत्पुरुषः - 30, 52, 57

कर्मधारयः - 36, 69

द्वन्द्वः – 49.2, 55

उपपदसमासः - 14, 35, 53

# अध्यापकभागः

समयः – एकघण्टा

फलम् – समासविषये आत्मविश्वासः ।

संस्कृतभाषाध्ययने सन्धयः समासाश्च अधिकं कष्टं जनयन्ति । समासाः इतरभाषास्वपि प्रयुज्यन्ते । परन्तु संस्कृते ते अत्यधिकाः । अतः अयं भागः सावधानं पाठनीयः ।

क्रमः – पठ्यानुसारं सर्वं विवरणीयम् ।

अव्ययीभावानां प्रयोगः विरलः । अतः तत्र विशेषावधानं मास्तु । बहुव्रीहिसमासः संस्कृते अत्यधिकतया प्रयुज्यते । 'अन्यासु यासु कास्वपि भारतीयभाषासु नोपलभ्यते इति मया प्रो. रामकृष्णमाचार्युलुमहोदयानां मुखतः एकवारं श्रुतम्[2] । (अयं विषयः छात्रान् प्रत्यपि वक्तव्यः । तेन तेषामवधानं भवति ।) आंग्लभाषायामत्यन्तविरलतया दृश्यते । (विवरणार्थमुदाहरणार्थं च अन्तर्जाले गवेषयत । बहुव्रीहिः अश्रुतपूर्वः इति हेतोः तस्मिन् विषये छात्राणां कष्टं भवतीति न आश्चर्यम् । तदर्थं 'पूर्वपदार्थप्रधानः, उत्तरपदार्थप्रधानः' इत्यस्यार्थः सावधानं विव्रियताम् । तदित्थम् – यथाशक्ति इत्यस्य 'शक्तिः यावत् विद्यते तावत्' इत्यर्थः । अन्ते यत् भवति तत् तत्र प्रधानम् । प्रकृते 'यावत् विद्यते तावत्' इति प्रधानम् । तत् पूर्वपदस्य अर्थः । अतः अव्ययीभावः पूर्वपदार्थप्रधानः । सूर्योदयः इत्यत्र उत्तरपदस्य अर्थः उदयः प्रधानः । अतः तत्पुरुषः उत्तरपदार्थप्रधानः । द्वन्द्वे कोऽर्थः प्रधानः? इति पृष्टे सामान्यतः छात्राः एव उत्तरन्ति 'उभयार्थः' इति । इदानीं बहुव्रीहिं स्वीकृत्य तत्र कथं 'अन्यपदार्थः प्रधानः भवति' इति दृश्यताम् । पीतशब्दस्य

---

[2] कन्नडव्याकरणे 'मुक्कण्ण = मूरु कण्णु इरुवव' इति उदाहरणं दत्तमस्तीति केचित् एकदा अवदन् । यदि 'मुक्कण्णु' इति उकारान्तं सदेव तत् पदं तमर्थं बोधयेत् तदा सः समासः बहुव्रीहिः इति स्वीकर्तुं शक्येत ।

पीतरूपवान् (yellow) अर्थः । अम्बरशब्दस्य वस्त्रम् अर्थः । पीताम्बर इति समासस्य तु पीताम्बरधारी अर्थः । अतः अयमन्यपदार्थप्रधानः । यदि अयमंशः छात्रैः गृहीतः तर्हि अग्रे प्रायः तैः कष्टं नानुभूयते !

इदानीं सुभाषितानि स्वीकृत्य समस्तपदानां परिचयं कारयत । छात्रैः वाचयत । भवन्तः केवलं पदनामर्थान् वदन्तु ते समासनाम वदन्ति ! यदि वक्तुं न पारयन्ति तर्हि द्वित्रिवारं 'एतादृशार्थसद्भावात् अत्र अयं समासः' इति मार्गदर्शनं कुर्वन्तु ।

कर्मधारये 'कृष्णश्चासौ सर्पश्च' इति 'स चासौ' इति अन्तर्भाव्य विग्रहः सामान्यतः ग्रन्थेषु प्रदर्श्यते । 'कृष्णः सर्पः = कृष्णसर्पः' इत्यप्येकः विग्रहवाक्यप्रदर्शनक्रमः अस्ति । आदौ स एव क्रमः अनुसरणीयः । अन्यथा पुंलिङ्गे एकवचने 'स चासौ' बहुवचने 'ते च ते' स्त्रियां 'सा च सा' नपुंसके 'तच्च तत्' इति विग्रहे बहुविधतां दृष्ट्वा छात्राः व्याकुलाः भवेयुः ।

केचित् अधीतसंस्कृतव्याकरणाः पृच्छेयुः – द्विगुसमासः अत्र कुतः नास्तीति । 'अधिकतया प्रयुज्यमानानामेव परिचयः अत्र उद्देश्यः' इति तस्य उत्तरम् ।

मध्यमपदलोपिसमासस्य सुलभतया बोधनाय दूध्-फेडा (दूध्-मिश्रिता फेडा), तैर्-ऑडॆ (दधि-वटिका, तैर्-पूरितऑडॆ), लांग्-मंज (रौडि-नाम!, लांग्-धारकमंज) – इत्यादिलौकिकोदाहरणं दीयताम् ।

अन्ते इयमेका सूचना – उपपदसमासविषये पठ्यपुस्तकेषु प्रायः नोच्यते । अथवा अधिकमवधानं न दीयते । परन्तु तेषां प्रयोगोऽपि अधिकः । तेषां विग्रहोऽपि विलक्षणः । विचित्रविग्रहकारणतः, अर्थात् समासाघटकपदघटितविग्रहवाक्यस्य कारणतः, साम्प्रदायिकच्छात्राः अपि कष्टमनुभवन्ति, किमु आधुनिकाः । अतः पञ्चषोदाहरणपर्यन्तं छात्राः इमं समासं लक्षयितुं न प्रभवन्ति । अतः सावधानतया प्रसिद्धानि सर्वज्ञः, गृहस्थः, सर्वव्यापी, जनोपकारी इत्यादीनि पदानि प्रदर्श्य तेषामर्थं वाचयित्वा तेषां विग्रहं प्रदर्श्य कथं ते उपपदसमासाः इति मनसि स्थापनीयम् ।

विवरणावसरे 'नामपदं+धातुजन्यं नामपदं = उपपदसमासः' इत्यस्ति । सूर्योदयः इत्यत्रापि उदयः इति पदमपि धातुनिष्पन्ननामपदं खलु? इति प्रश्नः भवति । तस्य उत्तरं भवति 'नित्यसमासः' इति । 'ज' 'ज्ञ' इत्यादीनि पदानि केवलं समासे एव उपयुज्यमानानि पदानि । तेषां स्वतन्त्रतया प्रयोगः न अनुमतः । अत एव जले जम् इति न विग्रहः । इदमेव मनसि निधाय अस्वपदविग्रहः इति उच्यते । स्वं = समासः । स्वपदविग्रहः = समासघटकपदेन विग्रहः । अस्वपदविग्रहः = समासाघटकपदेन विग्रहः । अयं भेदः मनसि भवति चेत् अग्रे तद्धितादौ अस्वपदविग्रहः कुतः भवतीति बोधने आनुकूल्यं भवति ।

---

# षष्ठपाठः क्रियापदपरिचयः - छात्रभागः

धातुः(क्रियापदस्य मूलरूपम्)

विभागः १ (अर्थाधारितः) — सकर्मकः, अकर्मकः

विभागः २ (रूपाधारितः) — परस्मैपदी, आत्मनेपदी

| | सकर्मकः | अकर्मकः | परस्मैपदी | आत्मनेपदी |
|---|---|---|---|---|
| उदा. | प्रविशति | उपविशति | भजति | भजते |

**प्रश्नः**- बालः किं प्रविशति? ✓ किम् उपविशति? ×

**उत्तरम्**- गृहं विशति । ????

| दश लकाराः | तेषामर्थाः | उदा. परस्मैपदी | उदा. आत्मनेपदी |
|---|---|---|---|
| लट् | वर्तमानकालः | भवति - विशति | स्पर्धते |
| लुङ् | सामान्यभूतकालः | अभूत् - अविक्षत् | अस्पर्धिष्ट |
| | | अग्रहीत् - अवादीत् | अरंस्त |
| लङ् | भूतकालः (अनद्यतनः) | अभवत् - अविशत् | अस्पर्धत |
| लिट् | भूतकालः (अनद्यतनः+परोक्षः) | बभूव - विवेश | पस्पर्धे |
| लृट् | भविष्यत्कालः | भविष्यति - वेक्ष्यति | स्पर्धिष्यति |
| लोट् | प्रार्थना, आदेशः | भवतु - विशतु | स्पर्धताम् |
| विधिलिङ् | विधिः, सम्भावना | भवेत् - विशेत् | स्पर्धेत |
| | | कुर्यात् - जुहुयात् | कुर्वीत |
| [लुट् | भविष्यत्कालः | भविता - वेष्टा | स्पर्धिता |
| आशीर्लिङ् | आशिषि | भूयात् - विश्यात् | स्पर्धिषीष्ट |
| लृङ् | यदि-तर्हि | अभविष्यत् - अवेक्ष्यत् | अस्पर्धिष्यत] |

**तिङन्ते त्रयः भागाः** - वद् + अ + ति ---- धातुः+विकरणप्रत्ययः+तिङ्-प्रत्ययः

**दश गणाः-**

| **गणनाम धातुसङ्ख्या** | **व्याकरणरीतिः** | **मध्यस्थितिः** | **अन्ते रूपम्** |
|---|---|---|---|
| **भ्वादिः** १०९५ | भू+शप्+ति | = भव्+अ+ति | = भवति |
| **तुदादिः** १५६ | तुद+अ+ति | = तुद्+अ+ति | = तुदति |
| **दिवादिः** ४० | दिवु+श्यन्+ति | = दीव्+य्+ति | = दीव्यति |

[सावधानम् ! अस्य गणस्य आत्मनेपदिनां रूपाणि कर्मणि रूपवत् भासन्ते ।

उ.दा. विद्यते, मन्यते, जायते, प्रपद्यते, सूयते, प्रीयते, दूयते, पूर्यते, तप्यते]

| | | | |
|---|---|---|---|
| **चुरादिः** ४८२ | चुर्+णिच्+ति | =चोर्+अय+ति | = चोरयति |

[सावधानम् ! अस्य गणस्य रूपाणि णिजन्तरूपवत् भासन्ते ।

उ.दा. कारयति, श्रावयति, ग्राहयति, भावयति ।]

| | | | |
|---|---|---|---|
| **अदादिः** ७१ | अद्+ +ति | = अत्+ति | = अत्ति |
| **जुहोत्यादिः** २३ | हु+ +ति | = हु+हु+ति | = जुहोति |
| **स्वादिः** ३३ | षुञ्+श्नुः+ति | = सु+नु+ति | =सुनोति |
| **रुधादिः** ३५ | रुध्+श्नम्+ति | =रुणध्+ति | = रुणद्धि |
| **क्र्यादिः** ६१ | क्रीञ्+श्ना+ति | =क्री+णा+ति | = क्रीणाति |
| **तनादिः** १० | तनु+उ+ति | = तन्+ओ+ति | = तनोति |

## प्रमुखलकाराणां सामान्यतः रूपपरिचयः

| | | | | | | |
|---|---|---|---|---|---|---|
| **लट् प्र.पु.** | ति | तः | अन्ति | भवति | [भवतः] | भवन्ति |
| **म.पु.** | सि | थः | थ | भवसि | | |
| **उ.पु.** | मि | वः | मः | भवामि | | |
| **{आ.प.}** | ते | [एते] | अन्ते | स्पर्धते | | स्पर्धन्ते |
| | से | | | स्पर्धसे | | |
| | ए | [वहे | महे] | स्पर्धे | [स्पर्धावहे | स्पर्धामहे] |
| **लुङ् प्र.पु. १** | अ...त् (**लङ्-वत्**) | | अ...न् | अभूत् | | अभूवन् |
| **{प.प.} २** | अ...त् | | अ....उः | अकार्षीत् | | अकार्षुः |
| **{आ.प.}** | अ...त/ट | | अ....अत | अकृत | | अकृषत |
| | | | | अवन्दिष्ट | | अवन्दिषत |
| **लङ् प्र.पु.** | अ...त् | | अ...न् | अभवत् | | अभवन् |
| **{आ.प.}** | अ...त | | अ....अन्त | अवन्दत | | अवन्दन्त |
| **लिट् प्र.पु.** | अ/औ | [अतुः] | उः | बभूव/ययौ | [बभूवतुः] | बभूवुः |
| **{आ.प.}** | ए | [आते] | इरे | भेजे | [भेजाते] | भेजिरे |
| **लृट् प्र.पु.** | स्यति | | स्यन्ति | भविष्यति | | भविष्यन्ति |
| **{आ.प.}** | स्यते | | स्यन्ते | स्पर्धिष्यते | | स्पर्धिष्यन्ते |
| **लोट्** | तु | [ताम्] | अन्तु | भवतु | | भवन्तु |
| **{प.प.}** | अ/हि/उ/ | | | भव/देहि/कुरु | | |
| | आनि | | आम | भवानि | | भवाम |

| | | | | | | |
|---|---|---|---|---|---|---|
| {आ.प.} | तां | | न्तां | भजतां | | भजन्ताम् |
| | स्व | | | भजस्व | | |
| | [ऐ] | | | [भजै] | | |
| विधिलिङ् १ | एत् | [एतां] | एयुः | भवेत् | [भजेतां] | भवेयुः |
| {प.प.} | एः | | | भवेः | | |
| | एयं | | | भवेयम् | | |
| २ | यात् | [यातां] | युः | कुर्यात् | [कुर्यातां] | कुर्युः |
| | याः | | | कुर्याः | | |
| | यां | | | कुर्यां | | |
| {आ.प.} १ | एत | | एरन् | भजेत | | भजेरन् |
| २ | ईत | | ईरन् | कुर्वीत | | कुर्वीरन् |

## कर्मणिरूपपरिचयः

तिङन्तरूपाणि यथा कर्त्रर्थे भवन्ति तथा कर्मार्थेऽपि भवन्ति। उ.दा. कर्तरि- *भक्तः देवं सेवते* । कर्मणि - *भक्तेन हरिः सेव्यते*। (कन्नडे *पट्ट-पडु* इत्यनेन कर्मणिरूपं ज्ञायते । उ.दा. *तिन्नल्पट्टितु, माडल्पड्डत्तदे*। हिन्द्यां *या जान* - उ.दा. *किया जाता है*।) । **कर्मणि रूपाणि सदा आत्मनेपदे एव भवन्ति ।**

कर्मणि रूपाणि सुलभतया अवगन्तुं शक्यानि ।**धातुः+य+ते** - भज्+य+ते = भज्यते ।

कदाचित् धातौ व्याकरणरीत्या कश्चन व्यत्यासः भवति - **श्रु**+य+ते = **श्रूयते**, **कृ**+य+ते = **क्रियते**।

कर्मणि लुङि - अकारि, अबोधि, अभाजि, अग्राहि, अदायि इत्यादि ।

## णिजन्तरूपपरिचयः

क्रियां यः करोति सः कर्ता । यथा *देवदत्तः अन्नं पचति* । यदा देवदत्तः यज्ञदत्तेन अन्नस्य पाकं कारयति तदा देवदत्तः प्रयोजककर्ता, यज्ञदत्तः प्रयोज्यकर्ता । प्रयोजक-कर्तुः क्रियां वक्तुं णिच् इति प्रयोगः व्याकरणे उक्तः । चुरादिगणस्थधातुवत् रूपं भवति । *देवदत्तः यज्ञदत्तेन* ***पाचयति*** इति वाक्यम् । (कन्नडे *इसु* - उ.दा. *माडिसुत्तानॆ* । हिन्द्यां *वाना* - उ.दा. *करवाता है* । कन्नडे - *योचिसुत्तानॆ, वर्णिसुत्तानॆ, विनंतिसुत्तानॆ* इत्यादौ यथा स्वार्थे इसु तथा संस्कृते चुरादिगणस्थधातूनां स्वार्थे णिच् ।)

एतेषां लिटि '...मास' इति भवति । उ.दा. कारयामास, बन्धयामास, पाठयामास ।लुङि धातोः द्वित्वं भवति । उदा. कारयति - अचीकरत्, जनयति - अजीजनत् ।

**अभ्यासः -**

**सूचितश्लोकेषु निर्दिष्टम् अंशं लक्षयत –**

कः गणः? - 10, 56, 59, 63, 64

कः लकारः? - 11, 13, 15, 28, 50, 60, 67, 68, 71, 72, 73, 74

कर्तरि वा कर्मणि वा? - 9, 17, 38, 48, 54, 61, 62

तृतीयपरिशिष्टे विद्यमानेषु पदेषु तिङन्तानि लक्षयत ।

# अध्यापकभागः

अपेक्षितसमयः - १.३०/२ घण्टाः

फलम् - छात्राः संस्कृतस्य ९०% क्रियापदानां लकारं, न तु धातुं तदर्थं च, स्वयमवगच्छेयुः ।

वैशिष्ट्यम् – संस्कृताध्ययने एव अतिकष्टकरस्य क्रियापदपरिचयस्य परिचयः ।

सरल-कठिनसंस्कृते अयं भागः कठिनः । अत्यन्तारम्भस्तरीयछात्रान् प्रति अस्य पाठः मास्तु । यदा ते पूर्वपाठानामाधारेण पञ्चाशदधिकश्लोकान् पठन्ति शब्द-सन्धि-समासविषये तेषां क्लेशः न भवति तदा अयं पाठः आरभ्यताम् ।

पाठक्रमः - यथानिर्देशं तत्रत्यान् अंशान् पाठयन्तु ।

**प्रथमसोपानम्** - आत्मनेपदि-परस्मैपदिनोः कः व्यत्यासः ? इति बहवः पृच्छन्ति । अत्यन्तारम्भस्तरे 'ति-ते' इति रूपे व्यत्यासः इत्येव उच्यताम् । ज्ञातसंस्कृताः पृच्छन्ति चेत्, पाणिनिव्याकरणस्थमिदमुत्तरं वदन्तु – यदि क्रियाफलं कर्तारं प्रति गच्छति तदा 'आत्मने'पदी । यद्यन्यं प्रति गच्छति तदा 'परस्मै'पदी । उदाहरणं भवति – यज्ञे यजमानः 'आचार्यमुखेन कारयिष्ये' इति सङ्कल्पयति । आचार्यः 'करिष्यामि' इति ।

**द्वितीयसोपानम्** – दशसु लकारेषु सप्तानां प्रयोगः अधिकः । प्रथमतः तेषां नामानि छात्रैः वाचनीयानि । तेषामर्थः कथनीयः । लट्-लकारः वर्तमानकालं सूचयति – इत्यादि ।

तत्र भूतकालवाचकाः त्रयः लकाराः सन्ति । परिचायने अयं क्रमः - लुङ्, लङ् तथा लिट् । सामान्यभूतकालकथनाय, दशनिमेषपूर्वतनक्रियां कथयितुमपि, लुङ्लकारस्य प्रयोगः भवति । अद्यतनं भूतं वक्तुं लङ्लकारस्य प्रयोगः न करणीयः। प्रातः प्रवृत्तं कथयितुं तस्य प्रयोगः न भवति । केवलं ह्यः आरभ्य पूर्वतनं वक्तुमेव लङ्लकारस्य प्रयोगः ।

लिट्लकारस्य प्रयोगस्य विषये किञ्चित् स्वारस्यं वर्तते । या क्रिया अस्माभिः न दृष्टा, न अद्यतना, अत्यन्तं पूर्वा तां कथयितुं लिट्लकारस्य प्रयोगः । अत एव इतिहासपुराणादिषु लिट्लकारस्य प्रयोगः अधिकः । अत एव लिट्लकारस्य मध्यमपुरुषस्य प्रयोगः अत्यन्तं विरलः । उत्तमपुरुषस्य प्रयोगं मूर्ख एव करोति !

विधिलिङ् इत्यत्र विधिः नाम आधिकारिकः आदेशः ।

**तृतीयसोपानम्**– लकाराणां परिचयः । अन्ते ति भवति चेत् लट् । यथा गच्छति, पश्यति, पठति, भक्षयति इत्यादि ।

अक्षरस्य द्विः प्रयोगः भवति चेत् लिट् । जजाप, जगाम, रराम इति लिटः नानारूपाणि सावकाशं श्रावणीयम् ।

एवं सान्द्रीकृतैः (Bold) अक्षरैः दर्शितभागं संलक्ष्य तत्तल्लकाराः लक्षणीयाः ।

स्य इति मध्ये भवति चेत् लृट् । यथा गमिष्यति, भविष्यति, पठिष्यति, करिष्यति इत्यादि ।

आदौ अन्ते च अ....त् इति भवति चेत् लङ् अथवा लुङ् भवति । तत्र लट्लकाररूपस्य `अ' योजयित्वा अन्ते `ति' इत्यत्र `इ' निष्कास्यते चेत् लङ् । यथा भवति - अभवत् । गच्छति (अध्यापकः स्वयं वदेत्) - अगच्छत्(छात्रैः वाचयेत्), भजति - अभजत्, पश्यति - अपश्यत् इत्यादि छात्रैः वाचनीयम् ।

एवं, भवति - भवेत्, गच्छति - गच्छेत्, पश्यति - पश्येत् इत्यादि उक्त्वा वाचयित्वा च विधिलिङः परिचयः करणीयः । भवति - भवेतु, गच्छति - गच्छेतु, पश्यति - पश्येतु इति लोटः ।

लकारेषु लुङ्लकारः क्लिष्टः । तस्य लट्-लकारसम्बन्धेन रूपपरिचायनं न शक्यते । अ....त् इत्यंशस्तु समानः ।

लुट्-लृङ्-आशीर्लिङ्लकाराणां प्रयोगः अत्यन्तं विरलः । अतस्तेषां परिचयः इदानीं मास्तु । अत एव ते लकाराः आवरणयोः दत्ताः ।

**चतुर्थसोपानम्**- तिङन्ते त्रयः भागाः । यथानिर्देशं पाठनीयम् ।

**पञ्चमसोपानम्** - गणपरिचयः । दश गणाः इति शीर्षिकायाः अधः चत्वारः अंशाः सन्ति । प्रथमतः गणनाम, तदनु काश्चन सङ्ख्याः । एतद्द्वयमाहत्य प्रथमोंऽशः । तेषामयमभिप्रायः - पाणिनिधातुपाठे द्विसहस्रपर्यन्तं धातवः सन्ति । ते दशसु गणेषु विभक्ताः । यस्मिन् गणे यः धातुः प्रथमः तदादित्वेन व्यवहारः । भू आदिः यस्य सः = भ्वादिः इत्यादिरूपेण गणनाम्नां निष्पत्तिः । गणनाम्नां पुरतः १०१५ इत्यादिसङ्ख्याः तत्तद्गणे कियन्तः धातवः सन्तीति सूचयन्ति ।

व्याकरणरीतिः इति द्वितीयोंऽशः । आरम्भिकानाम् अस्य पाठः मास्तु । संस्कृतज्ञानां व्याकरणाभिरुचिकारणेन अयमंशः प्रदर्शितः ।

मध्यस्थितिः इति तृतीयोंऽशः । कस्मिन् गणे कः विकरणप्रत्ययः इति अत्र स्फुटं भवति । `ना कुत्र अस्ति?' `ओ कुत्र अस्ति?' .... इत्यदि प्रश्नपूर्वकं छात्रैः गणनामानि वाचनीयानि । अन्तिमरूपमिति चतुर्थः अंशः । सः स्पष्ट एव ।

तत्र भ्वादि-तुदादि-चुरादिगणाः समानाः । यतः तेषां विकरणप्रत्यये अन्ते अ अस्ति । तेन तेषां लट्-लोट्-लङ्-विधिलिङ्लकारेषु एकस्य ज्ञाने अन्यस्य अवगमनं शक्यते । यथा -

| अस्मिन् गणे | लट् | लोट् | लङ् | विधिलिङ् |
|---|---|---|---|---|
| भ्वादौ - | भवति | भवतु | अभवत् | भवेत् |
| तुदादौ - | तुदति | तुदतु | अतुदत् | तुदेत् |
| दिवादौ - | दीव्यति | दीव्यतु | अदीव्यत् | दीव्येत् |
| चुरादौ - | चोरयति | चोरयतु | अचोरयत् | चोरयेत् |

परन्तु अन्यगणेषु विधिलिङि इदं सौकर्यं नास्ति ।

| | | | | |
|---|---|---|---|---|
| अदादौ - | अत्ति | अत्तु | आदत् | अद्यात् |
| तनादौ - | तनोति | तनोतु | अतनोत् | तनुयात् |

साम्प्रदायिकपद्धतौ केचन गणज्ञानस्य महत्त्वं न यच्छन्ति । परन्तु उपरि दर्शितरीत्या विधिलिङः ज्ञानार्थं गणज्ञानमावश्यकम् । अकारान्तविकरणप्रत्ययस्थले अन्ते `एत्' इति, अन्यत्र `यात्' इति च विधिलिङि भवति ।

दिवादिगणस्य चुरादेश्च अधस्तात् आवरणयोः यदस्ति तत् आरम्भच्छात्राणां प्रथमतः मास्तु ।

**षष्ठसोपानम्** - प्रमुखलकाराणां सामान्यतः रूपपरिचयः । अयं भागः अत्यन्तं प्रमुखः । एतद्भागस्य पाठानन्तरं रामायणमहाभारतादिपुस्तकं यत्र कुत्रापि उद्घाट्य तत्रत्यक्रियापदानि दर्शयित्वा `एतेषां लकारान् वदन्तु' इत्युक्ते ९९% उत्तरं छात्राः, अध्यापकमार्गदर्शने, वदन्ति! छात्राणामपि स्वयमाश्चर्यं भवति `किमस्माभिः एतत्सर्वम् उक्तम्!' इति ।

प्रत्येकं लकारस्य नानापुरुषवचनेषु के के लक्षकवर्णाः (Indicators) भवन्ति इति दर्शयित्वा तत्पुरतः उदाहरणानि प्रदर्शितानि । सावधानं श्रावयन्तु । `युगपत् एतावतां स्मरणे स्थापनं कथ'मिति नूनं छात्राः व्याकुला भवन्ति । अतः तान् प्रति एवं वदन्तु `अत्रोक्तस्य सर्वस्य स्मरणमिदानीं मास्तु । इदानीं केवलं कस्य लकारस्य कस्मिन् पुरुषे कस्मिन् वचने कः वर्णः भवति इति केवलं लक्ष्यताम् । यदा नाना उदाहरणानि अग्रे परिशील्यन्ते तदा स्वयं सर्वं स्पष्टं भवति' इति ।

सावधानं लक्षकवर्णानां छात्रैः सह परिशीलनं कारणीयम् । तत्र प्रायः असाधारणाः एव वर्णाः भवन्ति । ए इति द्विवारमस्ति । आत्मनेपदिनि लटि लिटि च । परन्तु तत्र पुरुषभेदः अस्ति । एवं अ लिटि (प्र.पु. ए.व.) लोटि (म.पु. ए.व.) च अस्ति । उः इति लिटि विधिलिङि च बहुवचने अस्ति इति भाति । परन्तु विधिलिङि युः अस्ति, लिटि केवलम् उः ।

**सप्तमसोपानम्**- यथानिर्देशं कर्मणिरूपपरिचयः णिजन्तरूपपरिचयश्च कार्यः ।

एतदनन्तरं पूर्वोक्तरीत्या यतःकुतश्चित् नाना क्रियापदानि आनीय प्रदर्श्यन्ताम् । उदाहरणाय रघुवंशे प्रथमसर्गे इमानि क्रियापदानि तत्रत्यलक्षकांश्च परिशीलयाम । अधोदर्शितरीत्या तत्तत्स्थलीयलक्षकवर्णान् छात्रैरेव वाचयित्वा लकाराः वाचनीयाः ।

संलक्ष्यते - सम् उपसर्गः । लक्ष् +य+ते । ते अस्ति । अतः लट् । यते इत्यस्ति । अतः कर्मणि ।

सूचना - अत्र केवलं लकारलक्षणमेव उद्दिष्टम् । धात्वर्थे चिन्ता मास्तु ।

शशास - श शा इति द्विः प्रयोगात् लिट् ।

शशाप - श शा इति द्विः प्रयोगात् लिट् ।

व्यतीयुः - वि+अति+ईयुः । अन्ते उः अस्ति । अतः लिटि प्रथमपुरुषबहुवचनम् । यद्यपि युः इति विधिलिङि प्र.बहुवचने अस्ति । अयमपवादः । ययौ ययतुः ययुः इति लिट्लकारेऽपि एवमेव युः अन्ते भवति ।

विससर्ज - वि+ स स इति द्विः प्रयोगात् लिट् ।

विद्धि- विद्+हि । अन्ते हि अस्ति । अतः लोटि म.ए. ।

विदधे - अन्ते ए । अतः आत्मनेपदिनि लिटि प्र.ए. ।

भविष्यति - ष्यति । लृटि प्र.ए. ।

भवति - लट् ।

भव - अ । लोट म.ए. ।

विगणय - अन्ते अ अस्ति । अतः लोटि म.ए. । यद्यपि लिटि प्र.ए. अपि भवितुमर्हति । परन्तु अत्र `त्वं विगणय' इति प्रसङ्गेन निश्चयः भवति । यत्र यत्र द्वैविध्यस्यावकाशः तत्र तत्र प्रसङ्गेनैव निर्णयः ।

वक्ष्ये - वक्+ष्ये । लृटि उ.ए. ।

मुच्ये- मुच्+ये । कर्मणि उ.ए. ।

भेजे - ए । लिटि प्र.ए । प्रसङ्गेन निश्चयः । अन्यथा लटि उ.ए. इत्यपि वक्तुं शक्यम् ।

आववृते - व वृ ... ए । लिट् आत्मनेपदी ।

आराधय - अ । लोट म.ए. ।

आदत्ते - ते । आत्मनेपदिनः लट् ।

आचरः - लङि म.ए. ।

आचरेः - विधिलिङि म.ए. ।

अस्मि - लटि उ.ए. ।

अस्तु - लोट् ।

अस्ति - लट् ।

# सप्तमपाठः वृत्तिपरिचयः – छात्रभागः




**कृद्वृत्तिः**

धातुः+प्रत्ययः = नामपदं/अव्ययम्  उ.दा. → कृतवान्, कुर्वन्, कर्तुं, कृत्वा

**प्रसिद्धकृदन्तशब्दाः अव्ययानि च**

| अन्त्यवर्णः | व्याकरण-प्रत्ययः | विवरणम् | उदाहरणम् | अन्यभाषाशब्दाः | स्त्रीलिङ्गरूपं |
|---|---|---|---|---|---|
| त | क्त | सकर्मकात् धातोः कर्मार्थे अकर्मकात् कर्तुः अर्थे । भूतकाले । | कृतम्<br>उपविष्टः | माडल्पट्टितु (कन्नडे), किया गया (हिन्दी) [it was] done.<br>कुळितुकोंडनु (क.), बैठा (हि.) [he] sat | कृता<br>उपविष्टा |
| तवान् | प्रातिपदिकं - तवत्, प्रत्ययः - क्तवतु | कर्तुः अर्थे भूतकाले | गतवान्<br>भुक्तवान् | होदनु (क.) [वह] गया (हि.) [he] went | गतवती |

| अन् | मूलम्- अत्, शब्दपाठे पचत्-शब्द वत् । प्रत्ययः- शतृ | कर्तुः अर्थे , क्रियायाः प्रचलनार्थे । केवलं परस्मैपदिधातुतः । Continues Tense | गच्छन्<br>अनुभवन् | होगुत्ता (क.) जाता हुआ (हि.) [he is] going | गच्छन्ती<br>अनुभवन्ती |
|---|---|---|---|---|---|
| आन | शानच् | कर्तुः / कर्मणः अर्थे । केवलं आत्मनेपदिधातुतः | वन्दमानः<br>क्रियमाणं | नमिसुत्ता (क.) नमन करता हुआ(हि.) [he is] bowing.<br>माडल्पडुत्ता (क.) किया जाता हुआ(हि.) [it is] being done. | वन्दमाना<br>क्रियमाणा |
| ता | प्रातिपदिकं - तृ, प्रत्ययः- तृच् | कर्तुः अर्थे | कर्ता<br>भोक्ता | माडुववनु (क.) करने वाला (हि.) doer. | कर्त्री<br>भोक्त्री |
| य तव्य अनीय | यत्/ण्यत्- क्तव्य- अनीयर् | विध्यर्थे | कृत्यं, कार्यं/ कर्तव्यम्, करणीयम् | माडल्पडबेकु (क.) किया जाना चाहिये (हि.) should be done. | कृत्या/कार्या कर्तव्या करणीया |
| अन | ल्युट् | क्रियार्थे | श्रवणम् | केळुवुदु (क.) सुनना (हि.) hearing | प्रायः नपुंसकलिङ्गे |
| अक | ण्वुल् | कर्तुः अर्थे | रक्षकः | रक्षिसुववनु (क.) रक्षण करने वाला (हि) protector | रक्षिका |

| ति | क्तिन् | क्रियार्थे | श्रुतिः | केळुवुदु (क.) सुनना (हि.) hearing | केवलं स्त्रीलिङ्गे |
|---|---|---|---|---|---|
| **अव्ययानि य-त्वा-तुं** | ल्यप्-त्त्वा-तुमुन् | एतेषां विवरणम् अव्ययपाठे अस्ति | प्रविश्य, कृत्वा, कर्तुम् | | |

## तद्धितवृत्तिः

नामपदं + प्रत्ययः = नूतननामपदम्

उ.दा. → शिवस्य इदं = शैवम् । हनुः अस्य अस्ति इति = हनुमान् ।

**समासवृत्तिः** - पूर्वं विस्तरेण प्रदत्ता

**एकशेषवृत्तिः** (विरला)- माता च पिता च = पितरौ । पुत्री च पुत्रश्च = पुत्रौ ।

**सनाद्यन्तवृत्तिः** (विरला)

धातुः + सन् (प्रत्ययः)+ लकाराः= नूतनक्रियापदम्

पा (=पाने) + सन् + लट् = पिपासति = पातुम् इच्छति ।

**अभ्यासः -**

तृतीयपरिशिष्टे विद्यमान् कृदन्तान् लक्षयत ।

एतानि कृदन्तानि उपयुज्य वाक्यानि रचयत –

भक्षितं, पठितवान्, कर्षकः, रक्षित्वा, अनुभूय, ध्यानं, गतिः, अवलोकितुं, प्रविशन्, चिन्तनीयं, कार्यम् ।

# अध्यापकभागः

अपेक्षितसमयः - १ घण्टा

फलम् - छात्राणां प्रायः सर्वविधशब्दपरिचयः अनेन सिध्यति ।

वैशिष्ट्यम् - इतः परं यः कोऽपि शब्दः भवतु सः सुबन्तो वा तिङन्तो वा अव्ययं वा कृदन्तशब्दो वा कृदन्ताव्ययं वा शब्दजन्यशब्दः (तद्धितान्तो) वा क्रियापदेष्वपि शुद्धक्रियापदं वा इच्छाद्यर्थक-सनाद्यन्तधातुजन्यक्रियापदं वा इति छात्राणां स्फुटं भवति । कीदृशशब्दाः कोषेषु लभ्यन्ते ? कीदृशाः न लभ्यन्ते ? कुतः ते न लभ्यन्ते ? कुत्र वा लभ्येरन् ? इति तेषां स्फुटं भवति ।

वृत्तिः नाम परिणामः । इच्छा-ज्ञानादयः मनोवृत्तयः इति योगशास्त्र-वेदान्तशास्त्रेषु व्यवहारः अस्ति । व्याकरणेऽपि द्वयोः अर्थवच्छब्दयोः मेलने या नूतनस्य शब्दस्य निष्पत्तिः भवति सा वृत्तिरिति कथ्यते।

वृत्तिषु एकशेष-सनाद्यन्तानां प्रायः प्रयोगः विरलः । आद्यस्तरे तेषां पाठः मास्तु । अन्येषां एकवारं परिचयः भवतु । सर्वेषां स्मरणं न सम्भवति । यदा श्लोकाः पठ्यन्ते तत्रत्यानां शब्दानां पाठकाले अत्र पुनः पुनः अवलोकनं भवतु ।

उपपदसमासे इव तद्धितवृत्तौ अपि अस्वपदविग्रहः भवति ।

कृदन्तः सनाद्यन्तः च क्रियापदसम्बन्धी एव । परन्तु अयं व्यत्यासः यत् सनाद्यन्ते लकाराः भवन्ति । कृदन्तेषु न भवन्ति ।

# अष्टमपाठः इतरभाषाणां संस्कृतस्य च व्यत्यासः

## श्लोके अन्वयः

संस्कृतसाहित्ये श्लोकाः अत्यधिकाः । गेयतागुणेन ते चित्तमपि आकर्षयन्ति कण्ठस्थीकरणेऽपि सुलभतां सम्पादयन्ति । प्रायः श्लोकेषु छन्दसः नियमानुसारेण पदानि दूरे दूरे भवन्ति । तानि अर्थानुसारं योजयित्वा नूतनं वाक्यं सम्पादनीयम् । तदेतत् **अन्वयः** इति व्यवह्रियते । उदा. -

श्लोकः - नाभिषेको न संस्कारो सिंहस्य क्रियते वने ।
विक्रमार्जितसत्वस्य स्वयमेव मृगेन्द्रता।

अन्वयः- वने सिंहस्य न अभिषेकः क्रियते, न संस्कारः क्रियते । विक्रमार्जितसत्वस्य स्वयमेव मृगेन्द्रता (भवति) ।

## क्रियापदाध्याहारः

उपरितनश्लोके उत्तरार्धे क्रियापदं नास्ति । भवति - अस्ति इत्यादिपदानि अध्याहृत्य वाक्यानि पूरणीयानि । अर्थात् सरलक्रियापदाभावेऽपि संस्कृते वाक्यं शुद्धमेव ।

## सतिसप्तमी

यदा-तदा इति शब्दौ उपयुज्य यत्र वाक्यद्वयं प्रयुज्यते तत्र सतिसप्तमीप्रयोगे एकवाक्यं भवति । उदा.

**यदा-तदा** - यदा रावणः मृतः तदा सज्जनानां सन्तोषः जातः ।

**सतिसप्तमी** - रावणे मृते सति सज्जनानां सन्तोषः जातः ।

सतिसप्तमीस्थले क्रियाद्वयस्य मध्ये एका क्रिया ज्ञापिका अन्या ज्ञाप्या । पूर्वोदाहरणे रावणस्य मरणक्रिया सज्जनसन्तोषजननक्रियायाः ज्ञापिका । किञ्च सतिसप्तमीस्थले पूर्वा क्रिया, अर्थात्

ज्ञापिका क्रिया कृदन्तेन एव कथ्यते, नतु तिङन्तेन । यतः तिङन्तस्य सप्तमी न भवति । अतः, यदि प्रथमवाक्ये तिङन्तं भवति तर्हि तस्य यथोचितकृदन्ततया परिवर्तनं कार्यम् ।

उदाहरणान्तराणि -

* सैनिकेषु स्वकार्यं कुर्वत्सु देशः सुरक्षितो भवति ।

* दशरथे रोदिति सति रामः वनं गतवान् ।

अस्मिन् स्थले अन्यभाषासु एवं प्रयुज्यते -

| कन्नडे | हिन्द्याम् | आङ्ग्ले |
|---|---|---|
| सत्ताग, अळुत्तिरुवाग | जब-तब | while, when-then |

## कृदन्तयोगे षष्ठी

उदा :- रामस्य वनगमनं दुःखमजनयत् ।

इदानीं अतिथयः सभायाः आरम्भं कुर्वन्ति ।

एतादृशस्थलेषु कन्नडभाषिभिः षष्ठीस्थले द्वितीयाप्रयोगः प्रायः क्रियते ।

## संस्कृतस्य षष्ठ्याः कन्नडे गे/न-द-र

इदं वाक्यद्वयं तस्य कन्नडे अनुवादं च पश्याम -

दशरथस्य चत्वारः पुत्राः आसन् — दशरथस्य पुत्राः विनीताः

दशरथ**निगे** नाल्कु मंदि मक्कळु इद्दरु — दशरथ**न** मक्कळु विनीतरु

संस्कृते उभयत्र स्य इति षष्ठी एव अस्ति । परन्तु कन्नडे एकत्र गे इति अन्यत्र न इति चास्ति । कुत्र किं भवति ? इति विवेकाय अधोनिर्दिष्टः विषयप्रभेदः ज्ञातव्यः ।

सर्वाणि वाक्यानि कञ्चन विषयं बोधयन्ति खलु । तस्मिन् वाक्यबोध्यविषये द्वौ भागौ भवतः - उद्देश्यः विधेयश्च इति ।




सर्वदा विषये ज्ञातभागः उद्देश्यः अज्ञातभागः विधेयः भवति । आंग्लभाषायां इदं द्वयं Subject – Predicate इति कथ्यते । यदा षष्ठी उद्देश्यं बोधयति तदा गे अन्यथा न-द-र इति विवेकः ।

## धर्मधर्मिभावः

पुस्तकं = पुस्तकत्ववत् । वृक्षः = वृक्षत्ववान् ।

इदं(प्रथमा पुस्तकं(प्रथमा) ।   अस्य/ अस्मिन्(षष्ठी/सप्तमी) पुस्तकत्वम् ।

## विशेषणविशेष्ययोः समानलिङ्ग-विभक्ति-वचननियमः

कन्नडे हिन्द्यां संस्कृते च इमानि वाक्यानि पश्यन्तु -

| | | |
|---|---|---|
| अवनु धीर पुरुषनु | वह धीर पुरुष है | सः धीरः पुरुषः |
| धीर पुरुषनन्नु नोडु | धीर पुरुष को देखो | धीरं पुरुषं पश्य |
| धीर पुरुषनिंद ... | धीर पुरुष से . . . | धीरेण पुरुषेण . . . |
| धीर पुरुषनिगे. . . | धीर पुरुष को . . . | धीराय पुरुषाय . . . |
| धीर पुरुषर ... | धीर पुरुषों का... | धीराणां पुरुषाणां ... |

अन्यभाषासु विशेष्ये परिवर्तने जातेऽपि विशेषणं न परिवर्तते । परन्तु संस्कृते 'यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य, तल्लिङ्गं तद्वचनं सा च विभक्तिः विशेषणस्य' इति नियमः ।

## विभक्तिषु व्यत्यासः




या विभक्तिः कारकं सूचयति सा कारकविभक्तिः । यथा - बालकाय हस्तेन पुस्तकं ददाति इत्यत्र चतुर्थ्या सम्प्रदानं, तृतीयया करणं, द्वितीयया च कर्म सूच्यते । 'गुरवे नमः' 'बालकः जनन्या सह गच्छति' - अत्र चतुर्थी द्वितीया च नमः-सह इति शब्दसद्भावात् प्राप्ता । उप=समीपस्थित-पदकारणतः प्राप्ता इयं विभक्तिः उपपदविभक्तिः इति कथ्यते ।

अत्र **कारकविभक्तिसम्बन्धिव्यत्यासः** दर्शितः -

| | **संस्कृते** | **हिन्द्यां** | **कन्नडे** |
|---|---|---|---|
| गतिकर्मणः | द्वितीया | द्वितीया | चतुर्थी |
| उदा. | बालकः शालां गच्छति | बालक शाला जाता है | बालकनु शालॆगॆ होगुत्तानॆ |

संस्कृतवाक्यानाम् कन्नडे अनुवादसन्दर्भे 'शालां प्रति' इत्यर्थं स्वीकृत्य 'शालॆयन्नु **कुरितु**' इति अनुवादः क्रियते ।

| | **संस्कृते** | **हिन्द्यां** | **कन्नडे** |
|---|---|---|---|
| विषयार्थे | सप्तमी | षष्ठी | षष्ठी |
| उदा. | मोक्षे इच्छा अस्ति | मोक्ष की इच्छा है | मोक्षद इच्छॆ इदॆ |

मोक्षविषये इच्छा अस्ति इत्यर्थः ।

